समिदाहारकाः संप्रस्थिताः। समिदाहारकाणां संप्रस्थितानाम्[मय-मेवंरूपोऽभूत् अन्तराकथासमुदाहारः। भोः कौत्सा वात्साः शाण्डिल्या भारद्वाजाः पंचकाः उपपंचकाः। को वः कस्माद्देशादिति। तत्रैके कथयन्ति वयं पूर्वदेशादिति अपरे वयं दक्षिणापथादिति अपरे कथयन्ति वयं पाश्चात्त्या इति अपरे कथयन्ति [वयमुत्तरापथादिति। स माणवः कथयति। अहं मध्यदेशादिति। ते कथयन्ति। सर्वं] एव भवन्तोऽस्माभिर्देशा दृष्टाः श्रुताश्च न तु मध्यदेशः।

बुद्धिर्वसति पूर्वेण दाक्षिण्यं दक्षिणापथे।
पैशुन्यं पश्चिमे देशे पारुष्यं चोत्तरापथे॥ इति।

मध्यदेशोऽस्माभिर्न दृष्टः। कीदृशो माण[व मध्यदेशः। मध्यदेशो भवन्तो देशानामग्रयः। इक्षुशालिगोमहिषीसंपन्नो] भैक्षुकशतकलिलो दस्युजनविवर्जितः आर्यजनाकीर्णो विद्वज्जननिषेवितः। यत्र नदी गंगा पुण्या मङ्गल्या शुचिशौचेयसंमता उभयतः कूलान्यभिष्यन्दयमाना आवहति। अष्टादशवक्रो [नाम ऋषीणामग्रपदः। यत्र ऋषयस्तपश्चर्यया सशरीरं स्वर्गं कामयन्ते]। ते कथयन्ति। सन्ति माणव मध्यदेशे पण्डितसंख्याता इति। स कथयति। नन्वहं भवन्तः पूर्वमेवावोचं मध्यदेशो भवन्तो देशानामग्रयः। इक्षुशालिमालागोमहिषीसंपन्नो भै[क्षुकशतकलिलो दस्युजनविवर्जित आर्यजनाकीर्णो विद्वज्जननिषेवितः। यत्तु पूर्वमेवे]त्यवोचस्त्वं माणव। सन्ति माणव मध्यदेशे एवंविधा वादिवृषभा यादृश उपाध्यायः। मध्यदेशे भवन्तस्तादृशाः सन्ति

येषामुपाध्यायो मुखमपि न श[क्नु]याद् द्रष्टुमिति। मृष्टाभिधायी स माणवः। तेन तथा तथा मध्यदेशस्य वर्णो भाषि]तो यथा ते माणवकाः सर्व एव मध्यदेशगमनोत्सुकाः संवृत्ताः। अथ ते माणवकाः समितकाष्ठानि पर्येष्य समिद्भारकानादाय येन तस्य ब्राह्मणस्य निवेशनं तेनोपसंक्रान्ताः। [उपसंक्रम्य समितकाष्ठ-भारकानेकान्ते उपनिःक्षिप्य येन स] ब्राह्मणस्तेनोपसंक्रान्ताः। उपसंक्रम्य तं ब्राह्मणमिदमवोचन्। यत्खलूपाध्याय जानीथ अनेनास्माकं माणवेन मध्यदेशस्य तथा तथा वर्णो भाषितो येन वयं सर्व एव मध्यदेश[गमनोत्सुकाः संवृत्ताः। पुत्रकाः किं याव-च्छ्रूयते तावता गम्यते]। अपि तु श्रुतिरमणीयो देशः श्रोतव्यो नो तु गन्तव्यः। उपाध्याय एव माणवः कथयति। मध्यदेशे तादृशा वादिवृषभाः सन्ति येषामुपाध्यायो मुखमपि न शक्नोति द्रष्टुमिति। पुत्रकाः [तादृशः स एवैकः पृथिव्यां वादी नान्यः कश्चिदस्ति। बहुरत्नधरा व]सुन्धरा पूर्णा मही सुन्दरसुन्दराणाम्। उपाध्याय गच्छामः। तदपि तावद्देशावलोकनं कृतं भविष्यतीति तीर्थोपस्पर्शनं च ते च वादिवृषभाः पर्युपासिता भविष्यन्तीति। वादिनो निग्रहीष्यामो [देशं च पश्यामो लाभं च निष्पादयि-ष्याम इति। शिष्यानुरागी स ब्राह्मणो]ऽल्पपरिच्छदश्च। स तावन्माणवकानिदमवोचत्। पुत्रका यद्येवं गृह्णीथ अजिनानि वल्कलानि दण्डकमण्डलूनि स्रग्भाजनानि। गच्छामो मध्यदेश-मिति। तैर्गृहीतानि। स तैः सार्धं म[ध्यदेशं संप्रस्थितः। स कांश्चिद्वादिनो निगृह्य वादिरथे योजयति। केषाञ्चिद् भ]स्म-

घटिकया शिरांसि भिनत्ति। केचिदिष्वस्त्रशालामिव वायसा आरात्परिवर्जयन्ति। केचिच्छत्रध्वजपताकाभिः प्रत्युद्गच्छन्ति। केचित् शिष्यत्वमभ्युपगच्छन्ति। सोऽनुपूर्वेण ग्रामनगर[निगमपट्टिकापत्तनेषु] चञ्चूर्यमाणोऽनुपूर्वेण राजगृहमनुप्राप्तः। स ब्राह्मणः संलक्षयति। यावत् खलु पण्डितसंख्याताः सत्र ते राज्ञः सन्निधौ। तत्किमहं मूलमपहाय शाखापत्रपलाशं परामृष्टव्यं मंस्ये। यत्त्वहं राज्ञः सकाश[मुपसंक्रामेयमिति। स राज्ञः सकाशमुपसंक्रान्तो राजानं जयेनायुषा च वर्धयित्वा पुरतोऽवस्थितः। देव अ]स्ति मया गुरुसकाशात्कतिपयान्यक्षराण्युद्गृहीतानि। तदिच्छाम्यहं देवस्य पुरस्ताद्वादिभिः सार्धं कथाविमर्शं कर्तुमिति। ततः स राजा अमात्यानामन्त्रयते। अस्ति भवन्तः कश्चिदस्माकं विजिते वादी प्रतिवसति। [अमात्याः कथयन्ति। देवास्ति नालदग्रामके माठरो नाम ब्राह्मणो] वेदवेदाङ्गपारगोऽग्निकल्प इव ज्ञानेन। तेन माठरं नाम शास्त्रं प्रणीतमिति। राजा कथयति। आहूयतां स उपाध्याय इति। अमात्यैराहूतः। सोऽपि राजानं जयेनायुषा च वर्धयित्वा पुरतोऽ[वस्थितः। ततो राज्ञाभिहितः 'शक्नोषि त्वमुपाध्याय अनेन ब्राह्मणेन सार्धं] मम पुरस्तात्कथाविमर्शं कर्तुमिति'। स कथयति। शक्तितोऽहं देवं भाषिष्ये इति। ततो वादिमण्डलं प्रज्ञप्तम्। पक्षापरपक्षौ व्यवस्थापितौ। राजा कथयति। कस्य भवतु पूर्व[पक्ष इति। अमात्याः कथयन्ति। देवायं सर्वं जानाति। तदस्यैव भवतु] पूर्वपक्ष इति। तस्य पूर्वपक्षो दत्तः। तेन पञ्चशतिको

तैन्त्वः[1] समुच्चारितः। माठरेण प्रत्युच्चार्य दोषो दत्तः। इदं ते अयुक्तमिदमसदृशम् इदं नोपपद्यते इति। स तूष्णीमवस्थितः। [नचैतत् प्रतिक्रुष्टम्। एतन्निग्रहस्थानं यदुतान्तरे निष्प्रतिभानता]। राजा अमात्यानामन्त्रयते। कतरोऽत्र भवन्तः शोभत इति। ते कथयन्ति। देव उपाध्यायो माठर इति। ततो राजा आत्तमनाः संवृत्तः। तस्य मे लाभाः सुलब्धाः यस्य मे विजिते एवंविधो वादिनामग्रो [निवसति। अभिलपनार्थं स उवाच 'आचार्य कस्मिन् ग्रामे भवान्] निवसति'। देव नालदग्रामके। गच्छ स एव ते वादिभोगयो भवतु। स तस्य वादिभोगो दत्तः। संपत्तिकामो लोको विपत्तिप्रतिकूलः। सोऽनेकैर्ब्राह्मणैः कन्यानिमित्तं प्रार्थ्यते। ततस्ते]न सदृशात् कुलात् कलत्रमानीतम्। ततस्तेन सार्धं क्रीडति रमते परिचा]रयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। दीर्घदीर्घाभ्यां कोष्ठाभ्यां तस्य विस्तरेण जातस्य जातिमहं कृत्वा कोष्ठिल इति नामधेयं व्यवस्थापितम्। कोष्ठिलो दारकः उन्नीयते वर्धयते [क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तमोत्तमै रुपकरण]विशेषैराशु वर्ध्यते ह्रदस्थमिव पङ्कजम्। स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः। स संख्यायां मुद्रायां गणनायां ब्राह्मणिकायामीर्यायां चर्यायां शौचे समाचारे भस्मग्राहे मृत्तिका[ग्राहे डोङ्कारे भोङ्कारे ऋग्वेदे यजुर्वेदे अथर्ववेदे सामवेदे याजने य]जने अध्ययने अध्यापने दाने प्रतिग्रहे

षट्कर्मनिरतो ब्राह्मणः संवृत्तः। भूयस्तस्य क्रीडतो रममाणस्य परिचारयतो दारिका जाता। तस्याः शारिकायाः सदृशी अक्षिणी इति तस्या ज्ञातिभिः [शारिकेति नामधेयं व्यवस्थापितम्। यावदपरेण कालेनापरेण समयेन सा] वर्धिता महती संवृत्ता। सा लिप्यक्षराणि ग्राहिता। यावदपरेण समयेन भ्राता सार्धं वादं करोति। स तया गृह्यते। ततः पित्राभिहितः। पुत्र कथं नाम त्वं पुरुषो भूत्वा [स्त्रिया पराजितः। मयि कालगते वादिभोगो विनश्यति।

अथ स ब्राह्मणमाण]वो मन्त्रार्थी मन्त्रगवेषी दक्षिणापथमनुप्राप्तः। दक्षिणापथे तिष्यो नाम ब्राह्मणो लोकायते कृतावी। स तस्य सकाशमुपसंक्रान्तः। उपसंक्रम्याभिवादनं कृत्वा कथयति। इच्छाम्युपाध्याय[स्य पादशुश्रूषां कर्तुम्। कस्यार्थाय। लोकायतिकमुद्ग्रहीष्यामि। एवं कुरुष्वेति]। स तस्यान्तिके लोकायतमुद्ग्रहीतुमारब्धः। आचरितं तेषां माणवकानाम्। यदा अपठा भवन्ति तदा कदाचित्तीर्थोपस्पर्शिका गच्छन्ति कदाचिन्नगरावलोककाः कदाचित्समिदाहारकाः। [यावदपरेण समयेन अपठाः संवृत्तास्ततः सर्व एव समिदाहार]काः संप्रस्थिताः। तेषां समिदाहारकाणां संप्रस्थितानामयमेवंरूपोऽभूत् अन्तराकथासमुदाहारः। भोः कौत्सा वात्साः शाण्डिल्या भारद्वाजाः पञ्चका उपपञ्चकाः को [वः कस्माद्देशादिति। तत्रैके कथयन्ति वयं पूर्वदेशादिति। अपरे व]यं दक्षिणापथादिति। अपरे कथयन्ति वयं पाश्चात्त्या इति। अपरे वयमुत्तरापथादिति। स माणवः

कथयति । अहं मध्यदेशादिति । ते कथयन्ति । सर्व एव भवन्तोऽस्माभिर्देशा दृष्टाः श्रु[ताश्च न तु मध्यदेशः ।

बुद्धिर्वसति पूर्वेण दाक्षिण्यं दक्षिणापथे] ।

पैशुन्यं पश्चिमे देशे पारुष्यं चोत्तरापथे ॥ इति ।

मध्यदेशोऽस्माभिर्न दृष्टः । कीदृशो माणव मध्यदेशः । मध्यदेशो भवन्तो देशानामग्रयः । इक्षुशालिगोमहिषीसंपन्नो [भैक्षुकशतकलिलो दस्युजनविवर्जितः आर्यजनाकीर्णो विद्वज्ज]ननिषेवितः । यत्र गङ्गा नदी धन्या मङ्गल्या शुचिशौचेयसंमता उभयतः कूलान्यभिष्यन्दयमाना वहति । अष्टादशवक्रो नाम ऋषीणामग्रपदः । ऋषयस्तप[श्चर्यया सशरीरं स्वर्गं कामयमानाः । ते कथयन्ति । सन्ति माणव मध्यदेशे पण्डित]संख्याता इति । स कथयति । भवन्तः नन्वहं पूर्वमेवावोचम् । मध्यदेशो भवन्तो देशानामग्रयः । इक्षुशालिमालागोमहिषीसंपन्नो भैक्षुकशतकलिलो दस्युजनविवर्जित आर्यजनाकीर्णो विद्वज्जननिषेवितः । [यस्तु पूर्वमेवेत्यवोचस्त्वं माणव । सन्ति माणव मध्यदेशे एवंविधा वादिवृषभा यादृश] उपाध्यायः । मध्यदेशे भवन्तस्तादृशा वादिवृषभाः सन्ति येषामुपाध्यायो मुखमपि न शक्नुयाद् द्रष्टुम् । मृष्टाभिधायी स माणवः । तेन तथा तथा मध्यदेशस्य वर्णो भाषितो यथा ते माणवकाः सर्व एव मध्यदेशगमनोत्सुकाः [संवृत्ताः । अथ माणवकाः समित्काष्ठानि पर्येष्य समिद्भारकानादाय] येन तस्य ब्राह्मणस्य निवेशनं तेनोपसंक्रान्ताः । उपसंक्रम्य समित्काष्ठभारकानेकान्ते उपनिःक्षिप्य येन स

ब्राह्मणस्तेनोप[सं]क्रान्ताः। उपसंक्रम्य तं ब्राह्मणमिदमवोचम्। यत् खलूपाध्याय जानीथ अनेनास्माकं माणवेन [मध्यदेशस्य तथा तथा वर्णो भाषितो येन वयं सर्व एव मध्यदेशगम]नोत्सुकाः संवृत्ताः। पुत्रकाः किं यावच्छ्रूयते तावता गम्यते। अपि तु श्रुतिरमणीया देशाः श्रोतव्या नो तु गन्तव्याः। उपाध्याय एष माणवः कथयति। मध्यदेशे तादृशा वादिवृषभाः सन्ति येषामुपाध्या[यो मुखमपि न शक्नुयाद् द्रष्टुमिति। पुत्रकास्तादृशः स एवै]कः पृथिव्यां वादी नान्यः कश्चिदस्तीति। बहुरत्नधरा वसुन्धरा पूर्णा मही सुन्दरसुन्दराणाम्। उपाध्याय गच्छामः। तदपि तावद् देशावलोकनं कृतं भविष्यतीति तीर्थोपस्पर्शनं च। ते च वादिवृषभाः [पर्युपासिता भविष्यन्तीति वादिनो निग्रहीष्यामो देशं च] पश्यामो लाभं च निष्पादयिष्याम इति शिष्यानुरागी स ब्राह्मणोऽल्पपरिच्छदश्च। स तान् माणवकानिदमवोचत्। पुत्रका यद्येवं गृह्णीथ अजिनानि वल्कलानि दण्डकमण्डलूनि स्रग्भाज[नानि। गच्छामो मध्यदेशमिति तैर्गृहीतानि। स तैः सार्धं मध्यदेशं] संप्रस्थितः। स कांश्चिद्वादिनो निगृह्य वादिरथे योजयति। केषांचिद्भस्मघटिकया शिरःसु भिनत्ति। केचिदिष्वस्त्रशालामिव वायसा आरात्परिवर्जयन्ति। केचिच्छत्रध्वज-[पताकाभिः प्रत्युद्गच्छन्ति। केचिच्छिष्यत्वमभ्युपगच्छन्ति। सोऽनुपूर्वेण] ग्रामनगरनिगमपल्लिकापत्तनेषु चंचूर्यमाणोऽनुपूर्वेण राजगृहमनुप्राप्तः। स ब्राह्मणः संलक्षयति। यावत् खलु पण्डितसंख्याताः सव ते राज्ञः सन्निधौ। तत्किम[हं मूलमपहाय

शमखापत्रपलाशं परामृष्टव्यं मंस्ये । यत् त्वहं] राज्ञः सकाशमुपसंक्रामेयमिति । स राज्ञः सकाशमुपसंक्रान्तो राजानं जयेनायुषा च वर्धयित्वा पुरतोऽवस्थितः । देव अस्ति मया गुरुसकाशात् कतिपयान्यक्षराणि उ[द्गृहीतानि । तदिच्छाम्यहं देवस्य पुरस्ताद्वादिभिः सार्धं कथाविमर्शं] कर्तुमिति । ततः स राजा अमात्यानामन्त्रयते । अस्ति भवन्तोऽस्माकं विजिते कश्चिद्वादी प्रतिवसतीति । अमात्याः कथयन्ति । देवास्ति नालद्ग्रामके माठरो नाम ब्रा[ह्मणो वेदवेदाङ्गपारगोऽग्निकल्प इव ज्ञानेन । तेन माठरं नाम शा[स्त्रं प्रणीतमिति । राजा कथयति । आहूयतां स उपाध्याय इति । अमात्यैराहूतः । सोऽपि राजानं जयेनायुषा च वर्धयित्वा पुरतोऽवस्थितः । ततो राज्ञाभिहितः । शक्नोषि त्वमुपाध्याय अनेन ब्राह्म[णेन सार्धं मम पुरस्तात्कथाविमर्शं कर्तुमिति । स कथयति । शक्तितो]ऽहं देव भाषिष्ये इति । ततो वादिमण्डलं प्रज्ञप्तम् । पक्षापरपक्षौ व्यवस्थापितौ । राजा कथयति । कस्य भवतु पूर्वपक्ष इति । अमात्याः कथयन्ति । देवायं माठरो ब्राह्मणो वृद्धोऽ[स्य एव भवतु पूर्वपक्ष इति । तस्य पूर्वपक्षो दत्तः । माठरब्राह्मणोऽचिन्तयत्] । अयं नवग्रन्थः पटुकरणश्च । न शक्यं मयानेन सार्धं कथाविमर्शं कर्तुम् । वादपिच्छिलिकायां योजयामीति । तेन पञ्चशतिको दण्डकः समुच्चारितः । तेनापि ब्राह्मणेन प्रत्युच्चार्य दोषो दत्तः । [इदं ते अयुक्तमिदमसदृशम् । इदं नोपपद्यते । स तूष्णीमवस्थितः । नैतत्] प्रतिक्रुष्टं चैतन्निग्रहस्थानानां यदुतान्तरे निष्प्रतिभानता । राजा

अमात्यानामन्त्रयते। भवन्तः कतरोऽत्र शोभन इति। ते कथयन्ति। तिष्यो ब्राह्मण इति। राजा कथयति। दीयतामस्य वादि[भोगः। ते कथयन्ति। वयं चेदागन्तुकवादिनो] भोगान् दास्यामो न चिरादस्माकमङ्गमगधा जनपदा वादिभोगा भविष्यन्ति। अपि त्वेष एव नालदग्रामकोऽस्य वादिभोगो भवतु। माठरस्यान्तिकादस्मै ब्राह्मणाय। तस्यान्तिकाद्योऽन्यः शोभनः। [राजा आह तथास्तु। अथ] तैर्माठरस्यान्तिकादाच्छिद्य तिष्याय दत्तः। ततो माठरो ब्राह्मणः पत्नीमामन्त्रयते। [भद्रे गृहव्याकुलिकां संक्षिप]। अन्यत्र गमिष्यामः। कस्यार्थे। अस्य राज्ञः प्रभूतमस्माभिरुपकृतं न वयमनेना[नुरक्षिताः। तस्माद्गच्छामो वयमन्यत्रेति। तस्यान्तेवासिनः आचार्यस्य माठरस्य अन्यत्र गमनकथां श्रुत्वा तस्य सकाशं गताः]। ते कथयन्ति। उपाध्याय कस्यार्थे गृहव्याकुलिका संक्षिप्यत इति। स कथयति। प्रभूतमस्माभिर्भवन्तोऽस्य राज्ञः उपकृतम्। न वयमनेनानुरक्षिताः। तस्माद्गच्छामो वयमन्य[त्रेति। ते कथयन्ति। मान्यत्र गच्छत। अन्तेवासिनः असुखचित्ता भविष्यन्ति]। स गाथां भाषते।

वरं नरस्य परदेशवासो न तु स्वदेशे परिभूतवासः।
यस्मिन्नराणां न पराभवोऽस्ति स वै स्वदेशः स्वजनोऽपि तत्र॥

इति।

तिष्येण ब्राह्मणेन श्रुतम्। सः [अन्यत्र गच्छति। वयं दूरात् आगन्तुका वयं गमिष्यामः। इहैव ति]ष्ठ। तथैव वादिभोगा भविष्यन्तीति। स न तिष्ठति। ततस्तिष्येणोक्तः। उपाध्याय

इहैव तिष्ठ अस्य कर्वटकस्योपार्धं तव भवतु उपार्धं ममेति। स कथयति। एवमस्त्विति। पत्नीमामन्त्रयते। भद्रे अस्य राज्ञः प्रभूतमस्माभिरुपकृतं न वयमनेनानुर]क्षिताः। अपि तु तिष्येणैव ब्राह्मणेनास्माकं प्रभूतमुपकृतं वादिभोगानामुपार्धं ददता। तदस्य शारिकां भार्यार्थमनुप्रयच्छाम इति। [सा कथयति। अस्य माणवस्य ख्यातिर्दूरङ्गता। तौ पुत्रमामन्त्र्य तदर्थमारोचयामासतुः। स कथयति। कस्मादस्य दीयते। पितरौ कथं सुहृद्भावेन शत्रुं ज्ञास्यामि। सर्वेण सर्वथैतं जीवि]ताद् व्यपरोपयेत। वयमनेन भोगेभ्यः च्याविताः[1]। सर्वथा न दातव्येति। तौ कथयतः। मूर्खस्त्वं किं ज्ञास्यसीति। ताभ्यां तस्य वचनमवचनं कृत्वा दत्ता। तेन महता श्रीसमुदयेन परिणीता। [ब्राह्मणमाणवः कोष्ठिलोऽचिन्तयत्। एतैरहमवज्ञातः। अथ तत् सर्वं श्रुत्वा यत् कृत्यं] तदल्पं कृतमिति कृत्वा अपि तु किमयं तिष्यो माणवो जानीते। लोकायतम्। कुत्र भवन्तो लोकायतं ज्ञायते। ज्ञायते दक्षिणापथे। सोऽनुपूर्वेण दक्षिणापथमनुप्राप्तः। स तत्र गत्वा पृच्छति। को [अत्र भवन्तो लोकायतमधिगतः। सन्ति.......[2]। स तेषां सकाश]मुपसंक्रान्तः। उपसंक्रम्य कथयति। इच्छाम्यहं युष्माकं पादशुश्रूषां कर्तुम्। कस्यार्थाय। लोकायतमुद्ग्रहीष्यामि। ते कथयन्ति। न वयमागारिकस्य लोकायतमुपदिशामः। स कथयति। यद्येवं [प्रव्रजिष्यामि। तैः स प्रव्राजितः। प्रव्रज्य नखान् न तावच्छे]त्स्यामीति यावन्मया

1 Tib. is more diffuse here.

2 Tib. གུན་ཅ་ག །

लोकायतमुद्गृहीतं भवतीति। दीर्घदीर्घाणि नखानि दीर्घनखः परिव्राजको दीर्घनखः परिव्राजक इति संज्ञा उदपादि।

शारिकापि तिष्येण ब्राह्मणेन [सार्धं वादम् आरोपयति। तिष्येण सा निगृहीता। तिष्यब्राह्मणः शारिकया सार्धं क्रीडति रमते परिचार]यति। अन्यतमश्च सत्त्वश्च चरमभविकश्च हितैषी गृहीतमोक्षमार्गोऽन्तर्मुखो निर्वाणे बहिर्मुखः संसारादनर्थिकः सर्वभवगतिच्युत्युपपत्तिष्वन्तिमदेहधारी अन्यतमस्मात्प्रणीताद्देव[निकायात् च्यवित्वा शारिकायां गर्भमवक्रान्तः। शारिकया स्वप्नो दृष्टः। उल्काहस्तः पुरुषः] कुक्षिं भित्त्वा प्रविष्टः। महाशैलं पर्वतमधिरोहामि। उपरि विहायसा गच्छामि। महाजनकायो मे प्रणामं करोतीति। तया तिष्यस्य ब्राह्मणस्य निवेदितम्। ईदृशं चेदृशं च म[या स्वप्नो दृष्ट इति। स्वप्नाध्यायमजानता] तेनान्येषामपि स्वप्नाध्यायपाठकानां ब्राह्मणानां निवेदितम्। मम ब्राह्मण्या ईदृशश्च स्वप्नो दृष्ट इति। ते कथयन्ति। उपाध्याय शोभनः स्वप्नः। यत्कथयति उल्काहस्तो मे पुरुषः [कुक्षिं भित्त्वा प्रविष्टः। सा पुत्र प्रसूयते। स वर्षाष्टद्वयेन ऐन्द्रव्याकर]णमधीत्य सर्ववादिनो निग्रहीष्यति। यत्कथयति महाशैलं पर्वतमधिरोहामि। उपरि विहायसा गच्छामि। महाजनकायो मे प्रणामं करोतीति। प्रव्रजिष्यति [च संयमसिद्धिमात्मदृष्टिं च लप्स्यते।

या]वदपरेण समयेन तिष्यो ब्राह्मण्या सार्धं वादं करोतीति। तयासौ निगृह्यते। स संलक्षयति। को योगः। पूर्वमहमेतां

निगृह्णामि। साम्प्रतमहमनया निगृह्ये। [इतोऽस्याः प्रभावो नाभूत्। यतः सत्त्वोऽस्याः कु]क्षिमवक्रान्तस्तस्यैषोऽनुभाव इति। सा अष्टानां [नवानां] वा मासानामत्ययात्प्रसूता। दारको जातः अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिरा [दीर्घबाहुर्विस्तीर्णललाटो युग्मभ्रुरुत्तुङ्गनासः।[1] ज्ञातयः] संगम्य समागम्य विस्तरेण जातौ जातिमहं कृत्वा नामधेयं व्यवस्थापयितुमारब्धाः। किं भवतु माणवस्य नामेति। तिष्यो माणवकमुपाना[मयद् मातामहसकाशम्। सोऽचिन्तयत्। माणवस्य किं भवतु] नाम इति। स संलक्षयति। अयं माणवस्तिष्यस्य ब्राह्मणस्य पुत्रः। भवतु माणवस्य उपतिष्य इति नामेति। तिष्यो ब्राह्मणः कथयति। कीदृशं माणवस्य आर्यकेण नाम व्यवस्थापितम्। उपति[ष्य इति। स संलक्षयति। मातामहेन माणवस्य नाम पितुर्नामतः कृतम्]। अहमस्य मातृकं नामधेयं व्यवस्थापयामि। अयं माणवः शारिकायाः पुत्रः। भवतु माणवस्य शारिपुत्र इति नाम इति। ततः केचिच्छारिपुत्रो माणव इति संजानते। केचि[दुपतिष्यो माणव इति। सोऽष्टाभ्यो धात्रीभ्यः प्रदत्तः। स दारकः क्षीरेण] दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्च उत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्ध्यते ह्रदस्थमिव पंकजम्। स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः। स लिप्यां पारङ्गतः। संख्यायां गणनायां [चर्यायां शौचे समाचारे भस्मगृहे] मृत्तिकागृहे ओंकारे भोंकारे ऋग्वेदे यजुर्वेदे अथर्ववेदे सामवेदे यजने याजने अध्ययने अध्या-

1 Tib. differs here.

पने दाने प्रतिग्रहे षट्कर्मनिरतो ब्राह्मणः संवृत्तः। स पिता सर्वविद्यास्थानानि [समाप्य वर्षाष्टद्वयेन ऐन्द्रव्याकरणं पठित्वा सर्ववादिनो निगृ]ह्णाति। अपरेण समयेन पित्रा सार्धमध्ययनं कुर्वन्नेवमाह। तात कोऽस्य भाषितस्यार्थः। पुत्र अहमपि न जाने कोऽस्य भाषितस्यार्थ इति। अपि त्वेवमेतानि मन्त्रपदानि पूर्वकैः ऋषिभिस्तु[तानि गीतानि समायुक्तानि। यान्येतर्हि ब्राह्मणा अप्यनुगायन्तेऽप्य]नुभाषन्ते। स कथयति। न खलु तात निरर्थकान्येतानि मन्त्रपदानि पूर्वकैः ऋषिभिः स्तुतानि गीतानि समायुक्तानि यान्येतर्हि ब्राह्मणा अनुगायन्तेऽप्यनुभाषन्तेऽपि। [तेषामर्थो नैष इति संलक्ष्य कः खलु सोऽर्थः। स कथयति। अर्थोऽस्य अयमेव। तिष्यब्रा]ह्मण आत्तमनाः संवृत्तः। स संलक्षयति। एतावत्पुत्रेण करणीयम्। यदुत पैतृकी वा धुरा उन्नामयितव्या उत्तरो वा विशेषोऽधिगन्तव्यः। तदनेन माणवेन उत्तरो वि[शेषोऽधिगन्तव्यः। स पञ्चशतानि ब्राह्मणमाणवकान्] मंत्रान् वाचयति। तेनात्तमनसा तस्यैव तानि दत्तानि। उपतिष्योऽपि माणवः पञ्चमात्राणि माणवशतानि ब्राह्मणकान्मन्त्रान् वाचयितुमारब्धः। तेन ये दीर्घा वेदास्ते ह्र[स्वा ग्रन्थतो व्यञ्जनतश्च स्था]पयित्वा अर्थतो निरुक्तितश्च स्थापिताः[1]।

काष्ठवाटग्रामके मुद्गलो नाम पुरोहितः प्रतिवसति। आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनस[मृद्धः। तेन सदृशात् कुलात् कलत्रमानीतम्। स तेन] सार्धं क्रीडति

1 According to the Tib., the first chapter ends here.

रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता । सोऽपुत्रः पुत्राभिनन्दी च वरुणकुबेरशक्र-ब्रह्मादीनन्यांश्च देवताविशेषानायाचते । [तद्यथा आरामदेवता वनदेवताश्चत्वरदेवताः शृङ्गाटकदेवता बलि]प्रतिग्राहिका देवताः सहजाः सहधार्मिका नित्यानुबद्धा अपि देवता आयाचते । अस्ति चैव लोके प्रवादः यदायाचनहेतोः पुत्रा जायन्ते दुहितर-श्चेति । तन्नैवम् । यद्येवमभविष्यत् [एकैकस्य पुत्रसहस्रम-भविष्यत् । तद्यथा राज्ञश्चक्रवर्तिनः । अपि तु त्रयाणां स्थानानां] संमुखीभावात्पुत्रा जायन्ते दुहितरश्च । कतमेषां त्रयाणाम् । मातापितरौ रक्तौ भवतः संनिपतितौ । माता च कल्या भवति ऋतुमती । गन्धर्वश्च प्रत्युपस्थितो भवति । येषां त्रयाणां[1]

1 Here ends one complete leaf perhaps the 6th and the following leaves are lost.

किं महल्ले नाधिगतम्[1] । एकोत्तरिका । अयं तावत् खुस्तिकया[2] एकोत्तरिकया धर्मं देशयति । अमी भिक्षवस्त्रिपिटा धर्मकथिका युक्तमुक्तप्रतिभानाः । कस्मान्नैतान् अध्येषयसि । स तैरभिहितः । महल्ल किं त्वयाधिगतम् । स कथयति । एकोत्तरिका । ते कथयन्ति । त्वं तावन्महल्ल खुस्तिकया[2] एकोत्तरिकया धर्मं देशयसि । अमी भिक्षवस्त्रिपिटा धर्मकथिका युक्तमुक्तप्रतिभानाः । कस्मान्नैतान् अध्येषयसि । स कथयति । आर्या यूयं कस्यार्थे न देशयत किमहं निवारयामीति । ते कथयन्ति । नन्दोपनन्द प्रतिवदति एषोऽस्माकम् । नानुकूलो महल्लः । कुरुतास्योत्क्षेपणीयं कर्म । स संलक्षयति । यदीमे उत्क्षेपणीयं कर्म करिष्यन्ति नागभवनेऽप्यहमवकाशं न लप्स्ये । स तेषां शयितकानां तं विहारमन्तर्हापयित्वा महासमुद्रं प्रविष्टः । ते वालुकास्थले शयितकास्तिष्ठन्ति । नन्दोपनन्द उत्तिष्ठ । सिंहासनं प्रज्ञपय । धर्मं देशयामः । ते कथयन्ति । कोऽप्यसौ देवो वा नागो वा यक्षो वा भगवत्यभिप्रसन्नः बुद्धे धर्मे संघे कारान् कुर्वन् सोऽस्माभिर्विहेठितः । एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । योऽसौ भिक्षवो निर्मितो यदि षड्वर्गिकै-

1 In the previous lines, which are not available, it is stated that some Nāgas created a monastery, in which a Nāga in the form of an old monk was imparting religious instructions to other Nāgas, who took the form of brāhmaṇas and gṛhapatis. To that monastery came some monks (*āgantukas*), who objected to the delivery of the imperfect *Ekottarikā* (=Pali: Aṅguttara). The word 'Mahalla' refers to the old monk mentioned above.

Note: The Tibetan page references are to the Derge edition.

2 Tib. (Derge ed. 100a), ཟུར་པ་ཅན། =imperfect

भिक्षुभिर्न विहेठितोऽभविष्यद् यावच्छासनकोटि[1] बुद्धे धर्मे संघे कारान् अकरिष्यत। भगवान् संलक्षयति। यः कश्चिद् आदीनवो भिक्षवः अनधीष्टो[2] धर्मं देशयति। तस्मान्न भिक्षुणा अनधीष्टेन धर्मो देशयितव्यः। भिक्षुरनधीष्टो धर्मं देशयति सातिसारो भवति। अनापत्तय आगन्तुका निर्गता भवन्ति।

श्रावस्त्यां बुद्धरक्षितो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगः। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडते रमते परिचारयति। तस्य क्रीडतो रमतः परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता। आयुष्मान् शारिपुत्रो वैनेयापेक्षया तत् कुलमुपसंक्रान्तः। तेन स गृहपतिः सपत्नीकः शरणगमनशिक्षापदेषु प्रतिष्ठापितः। अपरेण समयेन सा तस्य पत्नी आपन्नसत्त्वा संवृत्ता। आयुष्मान् शारिपुत्रस्तस्य च वैनेयकालं ज्ञात्वा एकाकी एव तत् कुलमुपसंक्रान्तः। स गृहपतिः कथयति। नास्त्यार्यशारिपुत्रस्य कश्चित् पश्चाच्छ्रमणः। स कथयति। गृहपते किमस्माकं काशधानाद् वा कुशधानाद् वा पश्चाच्छ्रमणा भवन्ति। अपि तु ये भवद्विधानां सकाशा-ल्लभ्यन्ते अस्माकं पश्चाच्छ्रमणा भवन्ति। बुद्धरक्षितो गृहपतिः। आर्य मम पत्नी आपन्नसत्त्वा संवृत्ता। यदि पुत्रं जनयिष्यति

1 Tib. l. 1 omits उद्घाटको

2 Ibid. ལམ་གསོལ་བར =अयाचितः Cf. Vinaya, I, p. 113 : anajjhiṭṭhā

तमहमार्यस्य पश्चाच्छ्रमणं दास्यामि। स कथयति। गृहपते औपयिकमिदम्[1]।

सा अष्टानां वा नवानां वा मासानां प्रसूता। दारको जातः अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः संगतभ्रूस्तुङ्गनासः। तस्य ज्ञातयः संगम्य समागम्य त्रीणि सप्तकान्येकविंशतिदिवसानि विस्तरेण जातस्य जातिमहं कृत्वा नामधेयं व्यवस्थापयन्ति। किं भवतु दारकस्य नाम। अयं दारको बुद्धरक्षितस्य गृहपतेः पुत्रः। भवतु दारकस्य संघरक्षितो नाम। यस्मिन्नेव दिवसे संघरक्षितो जातस्तस्मिन्नेव दिवसे पञ्चानां वणिक्शतानां पञ्च पुत्रशतानि जातानि। तेषामपि कुलसदृशानि नामधेयानि व्यवस्थापितानि। संघरक्षितो दारक उन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्ध्यते ह्रदस्थमिव पङ्कजम्। यदा महान् संवृत्तस्तदायुष्मान् शारिपुत्रस्तस्य वैनेयकालं ज्ञात्वा एकाकी एव तत् कुलमुपसंक्रम्य निमित्तमुपदर्शयितुमारब्धः। बुद्धरक्षितेन गृहपतिना संघरक्षितोऽभिहितः। पुत्र अजात एव त्वं मयार्यशारिपुत्रस्य पश्चाच्छ्रमणो दत्त इति। चरमभविकः स सत्त्व आयुष्मन्तं शारिपुत्रं पृष्ठतः समनुबद्धः। स आयुष्मता शारिपुत्रेण प्रव्राजित उपसंपादित आगमचतुष्टयं च ग्राहितः।

अथापरेण समयेन तानि पञ्च वणिक्शतानि महासमुद्रगमनीयं पण्यं समुदानीय महासमुद्रमवतर्तुकामानि कथयन्ति।

1 Tib. 100b, l. 7: རྔབས་ཡོད་དོ།

कंचिद् वयं भवन्त आर्यकमवतारयामी योऽस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति। ते कथयन्ति। भवन्तः अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनक एतमेवावतारयामः। ते तस्य सकाशमुपसंक्रान्ताः। आर्यसंघरक्षित त्वमस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः। वयं च महासमुद्रं संप्रस्थिताः। त्वमप्यस्माभिः सार्धमवतर समुद्रमध्यगतानां धर्मं देशयिष्यसि। स कथयति। नाहं स्वाधीनः। उपाध्यायमवलोकयत। ते येनायुष्मान् शारिपुत्रस्तेनोपसंक्रान्ताः। उपसंक्रम्य कथयन्ति। आर्य शारिपुत्र अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः। वयं महासमुद्रं संप्रस्थिता एषोऽप्यस्माभिः सार्धमवतरतु अस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति। स कथयति। भगवन्तमवलोकयत। ते भगवतः सकाशमुपसंक्रान्ताः। भगवन् वयं महासमुद्रं संप्रस्थिता अयमस्माकमार्यसंघरक्षितो वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः। एषोऽप्यस्माभिः सार्धं महासमुद्रमवतरतु अस्माकं महासमुद्रमध्यगतानां धर्मं देशयिष्यति। भगवान् संलक्षयति। अस्त्येषां कानिचित् कुशलमूलानि। अथ कस्यान्तिके प्रतिबद्धानि। संघरक्षितस्य भिक्षोः। तत्र भगवान् संघरक्षितमामन्त्रयते। गच्छ संघरक्षित भयभैरवसहिष्णुना भवितव्यम्। अधिवासयति आयुष्मान् संघरक्षितो भगवतस्तूष्णींभावेन।

अथ तानि पञ्च वणिक्शतानि कृतकौतुकमङ्गलस्वस्त्ययनानि [1]शाकटैर्भारैर्भैंडैर्घोटकैरुष्ट्रै र्गोभिर्गर्दभैः प्रभूतं पण्यमारोप्य महासमुद्रं संप्रस्थितानि। अनुपूर्वेण ग्रामनगरनिगमपल्लीपत्तनेषु चञ्चूर्यमाणानि समुद्रतटमनुप्राप्तानि। ते निपुणतः समुद्रयानपात्रं प्रतिपद्य महासमुद्रमवतीर्णा धनहारकाः। तेषां महासमुद्रमध्यगतानां नागैर्वहनं विधारितम्। ते देवतायाचनं कर्तुमारब्धाः। योऽस्मिन् महासमुद्रे देवो वा नागो वा यक्षो वा प्रतिवसति स आचक्षतु किं मृगयतीति।

महासमुद्रात् शब्दो निश्चरति। आर्यसंघरक्षितमस्माकमनुप्रयच्छतेति। ते कथयन्ति। आर्यसंघरक्षितोऽस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनकः। भदन्त शारिपुत्रेणानुप्रदत्तको भगवता अनुप्रदत्तकः। श्रेयोऽस्माकमनेनैव सार्धं कालक्रिया नत्वेव वयं संघरक्षितं परित्यक्ष्यामः। ते मन्त्रयन्त आयुष्मता संघरक्षितेन श्रुताः। स कथयति। भवन्तः किं कथयन्ते। [ते] कथयन्ति। आर्यसंघरक्षितमस्माकमनुप्रयच्छतेति। स कथयति। कस्मान्नानुप्रयच्छध्वम्। ते कथयन्ति। आर्य त्वमस्माकं वयस्यकः सहजन्मिकः सहपांशुक्रीडनको भदन्त शारिपुत्रेणानुप्रदत्तको भगवतानुप्रदत्तकः। श्रेयोऽस्माकं त्वयैव सार्धं कालक्रिया नत्वेव वयमार्यसंघरक्षित त्वां परित्यक्ष्यामः। आयुष्मान् संघरक्षितः संलक्षयति। यदुक्तं भगवता भयभैरव-

1 Tib. 101b, l. 7: སྦྱད་དག་དང། =articles.

सहिष्णुना ते भवितव्यम् इतीदं तत्। स पात्रचीवरं गृहीत्वा आत्मानं महासमुद्रे प्रक्षेप्तुमारब्धः। स तैर्दृष्टः। ते कथयन्ति। आर्य संघरक्षित किं करोषि आर्य संघरक्षित किं करोषीति। स तेषां विक्रोशतां महासमुद्रे प्रपतितः। मुक्तं तद् वहनम्। स नागैर्गृहीत्वा नागभवनं प्रवेशितः। आर्य संघरक्षित इयं विपश्यिनः सम्यक्सम्बुद्धस्य गन्धकुटी। इयं शिखिनो विश्वभुवः क्रकुच्छन्दस्य कनकमुनेः काश्यपस्येयं भगवतो गन्धकुटी। आर्य संघरक्षित भगवतः सूत्रं मातृका च देवमनुष्येषु प्रतिष्ठितम्। वयं नागा विनिपतितशरीराः। अहो बतार्यसंघरक्षित इहाप्यागमचतुष्टयं प्रतिष्ठापयेत। स कथयति। एवं भवतु। तेन त्रयो नागकुमारा उत्साहिताः। एकोऽभिहितः। त्वं तावत् संयुक्तकमधीष्व। द्वितीयोऽभिहितः। त्वमपि मध्यमम्। तृतीयोऽभिहितः। त्वमपि दीर्घागममधीष्व। स कथयति। अहमपि तामेवैकोत्तरिकां विमृष्टरूपां प्रज्वालयामि। ते अध्येतुमारब्धाः। तत्रैकश्चक्षुषी निमीलयित्वोद्देशं गृह्णाति। द्वितीयः पृष्ठतोमुख उद्देशं गृह्णाति। तृतीयो दूरतः स्थित्वोद्देशं गृह्णाति। स एव तेषामेकः सगौरवः सप्रतीश इतिकरणीयश्च सर्वत्र पूर्वंगमः। आर्य उत्तिष्ठ दन्तकाष्ठं विसर्जय भगवतो मण्डलकमामार्जय चैत्याभिवन्दनं कुरु भुङ्क्ष्व शय्यां कल्पयेति। सर्वैस्तैरागमान्यधीतानि। स कथयति। आर्य अधीतान्येभिरागमानि किं धारयिष्यन्ति आहोस्वित् न धारयिष्यन्ति। स कथयति। स्मृतिमन्तका ह्येते धारयिष्यन्ति अपि तु दोषोऽस्त्ये-

षाम्। स कथयति। आर्य को दोषः। सर्वे ह्येतेऽगौरवा अप्रतीशाः। एकस्तावत् चक्षुषी निमीलयित्वोद्देशं गृह्णाति। द्वितीयः पृष्ठतोमुख उद्देशं गृह्णाति। तृतीयो दूरतः स्थित्वोद्देशं गृह्णाति। त्वमेवैकः सगौरवः सप्रतीश इतिकरणीयश्च सर्वत्र पूर्वंगमः। स कथयति। आर्य नह्येते अगौरवा अप्रतीशाः। यस्ताव-दयं चक्षुषी निमीलयित्वोद्देशं गृह्णाति अयं दृष्टिविषः। योऽप्ययं पृष्ठतोमुख उद्देशं गृह्णाति एषोऽपि श्वासविषः। योऽप्येष दूरतः स्थित्वोद्देशं गृह्णाति एषोऽपि स्पर्शविषः। अहमेको दंष्ट्रविषः। स भीत उत्पाण्डूत्पाण्डुकः कृशालुको दुर्बलको म्लानकोऽप्राप्तकायः संवृत्तः। स कथयति। आर्य कस्मात् त्वमुत्पाण्डूत्पाण्डुकः कृशालुको दुर्बलको म्लानकोऽप्राप्तकायः संवृत्तः। स कथयति। भद्रमुख अमित्रमध्येऽहं वासं कल्पयामि। सचेद् युष्माकमन्यतमोऽन्यतमं प्रकुप्येत मां नामावशेषं कुर्यात्। स कथयति। आर्यस्य वयं न प्रहरामः। अपि तु इच्छसि त्वं जम्बुद्वीपं गन्तुम्। भद्रमुख इच्छामि। तच्च वहन-मागतम्। स तैरुत्क्षिप्तः। वणिग्भिर्दृष्टः। ते कथयन्ति। स्वागतमार्यसंघरक्षिताय। स कथयति। अनुमोदन्तां भवन्तः। मया नागेष्वागमचतुष्टयं प्रतिष्ठापितम्। ते कथयन्ति। आर्यसंघरक्षित अनुमोदयामः। ते तद् वहनं प्रक्षिप्य संप्रस्थिताः। ते अनुपूर्वेण समुद्रतीरं गत्वा सर्वे ते वणिजः शयिताः। आयुष्मान्

संघरक्षितो महासमुद्रं द्रष्टुमारब्धः। उक्तं भगवता पञ्चासेचनक[1] दर्शना[नि[2]। कतमानि पञ्च।]

हस्ती नागश्च राजा च सागरश्च शिलोच्चयः।
असेचनकदर्शनानि पञ्च भगवतां वरे॥ इति।

चिरं महासमुद्रं पश्यन् जागरितः। सोऽपश्चिमे यामे गाढनिद्रावष्टब्धः शयितः। तेऽपि वणिजः सरात्रमेवोत्थाय स्थोराँल्लर्दयित्वा संप्रस्थिताः। ते कथयन्ति प्रभातायां रजन्याम्। कुत्रायं संघरक्षितः। तत्रैक एवमाहुः। पुरस्ताद् गच्छति। अपर एवमाहुः। पृष्ठत आगच्छति। अपर एवमाहुः। मध्ये गच्छतीति। ते कथयन्ति। आर्यसंघरक्षितोऽस्माभिश्छोरितः। न शोभनमस्माभिः कृतम्। प्रतिनिवर्तयामः। आर्यसंघरक्षितो भवन्तो महर्द्धिको महानुभावो यः समुद्रमध्ये न कालगतः स इदानीं कालं करिष्यति स्थानमेत[न्न] विद्यते यदसावग्रत एव यास्यति। आगच्छत गमिष्यामः। ते संप्रस्थिताः।

आयुष्मान् अपि संघरक्षितः सूर्यस्याभ्युद्गमनसमये सूर्यांशुभिस्ताडितः प्रतिबुद्धो यावन्न किंचित् पश्यति। प्रक्रान्ता वणिजः। सोऽपि पन्थलिकां[3] गृहीत्वा संप्रस्थितः। यावदन्यतमस्यां सालाटव्यां विहारं पश्यति उद्गतं मञ्चपीठवेदिकाजालवातायनगवाक्षपरिमण्डितं भिक्षूंश्च संप्रावृतान् संप्रच्छन्नान्

1 Tib. 104b, l. 1 ; ཆོག་མི་ཤེས =असेचनक=अतृप्त, i. e. one is not satisfied by repeated visualisation of the deity. See also *Divyā*. pp. 23,226.

2 In the *Divyā*. p. 334, the text has been shortened.

3 Tib. 105a, l. 1 : ཕྲན་ལམ=narrow path

शान्तेनेर्यापथेनावस्थितान्। स तेषां सकाशमुपसंक्रान्तः। स तैरुक्तः। स्वागतं भदन्त संघरक्षिताय। स तैर्विश्रामितः। विश्रामयित्वा विहारं प्रवेशितो यावत् पश्यति शोभनां शयनासनप्रज्ञप्तिं कृतां प्रणीतं चाहारमुप[सं]हृतम्। स तैरुक्तः। भदन्त संघरक्षित मा तृषितोऽसि मा बुभुक्षितोऽसि। [स] कथयति। आर्यास्तृषितोऽस्मि बुभुक्षितोऽस्मि। भदन्त संघरक्षित भुङ्क्ष्व। स कथयति। संघमध्ये भोक्ष्यामि। ते कथयन्ति। भदन्त संघरक्षित भुङ्क्ष्व। आदीनवोऽत्र भविष्यति। तेन भुक्तम्। स भुक्त्वैकान्तेऽपक्रम्यावस्थितः। यावत् तेषां गण्डी आकोटिता। ते स्वकस्वकानि पात्राण्यादाय यथागत्य निषण्णाः। स च तेषां विहारोऽन्तर्हितः। अयोमुद्गराः प्रादुर्भूताः। तैस्तावदयोमुद्गरैः परस्परमार्त्तस्वरं क्रन्दद्भिः शिरांसि भग्नानि। यावत् कालमकालीभूतम्[1]। ततः पश्चात् पुनरपि तेषां विहारः प्रादुर्भूतः। ते च भिक्षवः शान्तेनेर्यापथेनावस्थिताः। आयुष्मान् संघरक्षितस्तेषां सकाशमुपसंक्रान्तः। के यूयमायुष्मन्तः केन वा कर्मणा इहोपपन्नाः। भदन्त संघरक्षित दुष्कुहका जाम्बुद्वीपका मनुष्याः। नाभिश्रद्धास्यसि। स कथयति। अहं प्रत्यक्षदर्शी कस्मान्नाभिश्रद्धास्ये। ते कथयन्ति। भदन्त संघरक्षित वयं काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। तैरस्माकं भक्ताग्रे रणमुत्पादितम्। ते वयं भक्ताग्रे रणमुत्पादयित्वा इह प्रत्येकनरकेषूपपन्नाः।

1 Tib. 105b. 1 2 : ཇི་ཙམ་ན་ དུས་མ་ཡོལ་བ་དང་ =lit. when the time has not yet passed, i. e., immediately after.

स्थानमेतद् विद्यते यदस्माभिः इतश्च्युतैर्नरकेषूपपत्तव्यं भविष्यति। साधु संघरक्षित जम्बुद्वीपं गत्वा सब्रह्मचारिणामारोचय। मायुष्मन्तः संघमध्ये रणमुत्पादयिष्यथ। मा अस्यैवंरूपस्य दुःखदौर्मनस्यस्य भागिनो भविष्यथ तद्यथा श्रमणाः काश्यपीयाः।

स संप्रस्थितः। यावत् पश्यति द्वितीयं विहारमुद्गतं मञ्चपीठवेदिकाजालवातायनपरिक्षिप्तं गवाक्षपरिमण्डितं भिक्षूंश्च संप्रावृतान् संप्रतिच्छन्नान् शान्तेनेर्यापथेनावस्थितान्। स तेषामुपसंक्रान्तः। स तैरुक्तः। स्वागतं भदन्त संघरक्षिताय। स तैर्विश्रामितः। विश्रामयित्वा विहारं प्रवेशितो यावत् पश्यति शोभनां शयनासनप्रज्ञप्तिं कृतां प्रणीतं चाहारं समन्वाहृतम्। स तैरुक्तः। भदन्त संघरक्षित भुङ्क्ष्व। तेन दृष्टादीनवेन भुक्तम्। भुक्त्वा एकान्ते अपक्रम्यावस्थितः। तेषां गण्डी आकोटिता। ते स्वकस्वकानि पात्राण्यादाय यथागत्य निषण्णाः। स च विहारोऽन्तर्हितः। तदन्नपानम् अयोरसं प्रादुर्भूतम्। तैरार्त्तस्वरं क्रन्दद्भिस्तावदयोरसेन परस्परमात्मा सिक्तो यावत् कालमकालीभूतम्। ततः पश्चात् पुनरपि स तेषां विहारः प्रादुर्भूतः। ते च भिक्षवः पुनरपि शान्ताः शान्तेनेर्यापथेनावस्थिताः। स तेषां सकाशमुपसंक्रान्तः। के यूयमायुष्मन्तः केन वा कर्मणा इहोपपन्नाः। दुष्कुहका भदन्त संघरक्षित जाम्बुद्वीपका मनुष्याः। नाभिश्रद्दधास्यसि। स कथयति। अहं प्रत्यक्षदर्शी कस्मात् नाभिश्रद्दधास्ये। ते कथयन्ति। भदन्त संघरक्षित वयं काश्यपस्य

सम्यक्सम्बुद्धस्य श्रावका आसन् । संघस्य च स्नेहलाभे संपन्ना आगन्तुका भिक्षव आगताः । तैरस्माभिरमात्सर्यपरिगृहीतैरेवं चित्तमुत्पादितम् । न तावद्भोजयिष्यामो यावदेते आगन्तुका भिक्षवो न प्रक्रान्ता भविष्यन्तीति । तैरस्माभिस्तत् तथैव कृतम् । साप्ताहिकं चाकालदुर्दिनं प्रादुर्भूतम् । तेन तदन्नपानं क्लेदं गतम् । वयं श्रद्धादेयं विनिपातयित्वा इह प्रत्येकनरकेषूपपन्नाः । स्थानमेतद् विद्यते यदस्माभिरिह च्युतैर्नरकेषूपपत्तव्यं भविष्यति । साधु भदन्त संघरक्षित जम्बुद्वीपं गत्वा सब्रह्मचारिणामारोचय । मायुष्मन्तः श्रद्धादेयं विनिपातयिष्यथ । मास्यैवंरूपस्य दुःखदौर्मनस्यस्य भागिनो भविष्यथ तद्यथा श्रमणाः काश्यपीयाः ।

स संप्रस्थितो यावत् पश्यति तृतीयं विहारमुद्गतं मञ्चपीठवेदिकाजालवातायनगवाक्षपरिमण्डितं पूर्ववद् यावत् आयुष्मान् संघरक्षितो भुक्त्वा एकान्तेऽपक्रम्यावस्थितः । गण्डय आकोटिताः । स तेन विहार आदीप्तः प्रदीप्तः संप्रज्वलित एकज्वालीभूतो ध्मातुमारब्धः । तेऽपि तस्मिन्नार्त्तस्वरं क्रन्दन्तस्तावद् दग्धा यावत् कालमकालीभूतम् । ततः पश्चात् पुनरपि तेषां विहारः प्रादुर्भूतः । ते च भिक्षवः शान्ताः शान्तेनेर्यापथेनावस्थिताः । स तेषां सकाशमुपसंक्रान्तः । के यूयमायुष्मन्तः केन वा कर्मणा इहोपपन्नाः । दुष्कुहका भदन्त संघरक्षित जाम्बुद्वीपका मनुष्याः । नाभिश्रद्दधास्यसि । स कथयति । अहं प्रत्यक्षदर्शी कस्मान्नाभिश्रद्दधास्ये । ते कथयन्ति । भदन्त संघरक्षित वयं काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन् ।

दुःशीलास्ते वयं शीलवद्भिर्भिक्षुभिर्निष्काशिताः । तैरस्माभिरेकः शून्यविहार आवासितः । यावत् तत्रैकः शीलवान् भिक्षुरागतः । अस्माकं बुद्धिरुत्पन्ना । तिष्ठतु अयं भिक्षुः । अयमप्येकोऽस्माकं दक्षिणां शोधयिष्यति । स तत्रैव स्थितो यावत् तस्य आनिषङ्गेन पुनरपि बहवः शीलवन्तो भिक्षव आगताः । ते वयं तत्रापि निर्वासिताः । तैरस्माभिरामर्षजातैः शुष्काणि काष्ठानि शुष्काणि तृणानि शुष्काणि गोमयानि उपसंहृत्य तस्मिन् विहारे अग्निर्दग्धः । तत्र प्रभूताः शैक्षाशैक्षाः पुद्गला दग्धाः । ते वयं शैक्षाशैक्षान् पुद्गलान् दग्ध्वा इह प्रत्येकनरकेषूपपन्नाः । स्थानमेतद् विद्यते यदस्माभिरिह च्युतैर्नरकेषूपपत्तव्यं भविष्यति । साधु भदन्त संघरक्षित जम्बुद्वीपं गत्वा सब्रह्मचारिणामारोचय । मायुष्मन्तः सब्रह्मचारिणामन्तिके प्रदुष्टचित्तमुत्पादयिष्यथ । मास्यैवंरूपस्य दुःखदौर्मनस्यस्य भागिनो भविष्यथ तद्यथा श्रमणाः काश्यपीयाः ।

आयुष्मान् संघरक्षितः संप्रस्थितो यावत् सत्त्वानद्राक्षीत् स्तम्भाकारान् कुड्याकारान् वृक्षाकारान् पत्राकारान् पुष्पाकारान् फलाकारान् रज्ज्वाकारान् संमार्जन्याकारान् उदूखलाकारान् खट्वाकारान्[1] स्थालिकाकारान् ।

आयुष्मान् संघरक्षितो जनपदान् गतः । अन्यतमस्मिन्नाश्रमपदे पञ्चमात्राणि ऋषिशतानि प्रतिवसन्ति । तैरायुष्मान् संघरक्षितो दूरत एव दृष्टः । ते कथयन्ति । भवन्तः क्रियाकारं

1 Tib. 108a, l. 2: གཏུན་འདྲ་བ་དག་ དང ། =like a pestle.

तावत् कुर्मः । बहूल्लापका:[1] मणाः शाक्यपुत्रीया भवन्ति । नास्य केनचिद् वचनं दातव्यम् । ते क्रियाकारं कृत्वावस्थिताः। आयुष्मांश्च संघरक्षितस्तेषां सकाशमुपसंक्रान्तः । उपसंक्रम्य प्रतिश्रयं याचितुमारब्धः । न कश्चिद् वाचमनुप्रयच्छति । तत्रैक ऋषिः सशुक्लधर्मः कथयति । किं युष्माकं प्रतिश्रयं न दीयते । अपि तु युष्माकं दोषः अस्ति । बहूल्लापका यूयम् । समयेनाहं भवतः प्रतिश्रयं दास्ये सचेत् किंचिन्न मन्त्रयसि । आयुष्मान् संघरक्षितः कथयति । ऋषे एवं भवतु । तत्रैक ऋषिर्जनपदचारिकां गतः । तस्य कुटिः शून्यावतिष्ठते । स कथयति । अस्यां कुटिकायां शय्यां कल्पय । आयुष्मता संघरक्षितेन सा कुटिका सिक्ता संमृष्टा संमार्जिता सुकुमारी गोमयकार्षी चानुप्रदत्ता । तैर्दृष्टः । ते कथयन्ति । भदन्त शुच्यपि मार्जन्ति एते श्रमणाः शाक्यपुत्रीयाः। आयुष्मान् संघरक्षितो बहिः कुटिकायाः पादौ प्रक्षाल्य कुटिकां प्रविश्य निषण्णः पर्यङ्कमाभुज्य ऋजुं कायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य । या तस्मिन्नाश्रमपदे देवता प्रतिवसति सा रात्र्याः प्रथमे यामे येनायुष्मान् संघरक्षितस्तेनोपसंक्रान्ता । उपसंक्रम्य कथयति । आर्य संघरक्षित धर्मं देशय । आयुष्मान् संघरक्षितः कथयति । सुखिता त्वम् । न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धं किं निष्कासापयितुमिच्छसि। सा संलक्षयति। श्रान्त-कायोऽयं स्वपितु । मध्यमे यामे उपसंक्रमिष्यामि । सा मध्यमे यामे उपसंक्रान्ता । उपसंक्रम्य कथयति । आर्य संघरक्षित धर्मं

1 Tib. 108a, 1, 3: སྨྲ་བ་མང་བ་ཡིན་པས=talking too much.

देशय । आयुष्मान् संघरक्षितः कथयति । सुखिता त्वम् । न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धं किं निष्कासापयितुमिच्छसि । सा संलक्षयति । श्रान्तकायोऽयं स्वपितु । पश्चिमे यामे उपसंक्रमिष्यामि । सा पश्चिमे यामे उपसंक्रान्ता । उपसंक्रम्य कथयति । आर्य संघरक्षित धर्मं देशय । आयुष्मान् संघरक्षितः कथयति । सुखिता त्वम् । न पश्यसि मया क्रियाकारेण प्रतिश्रयं लब्धं किं निष्कासापयितुमिच्छसि । सा कथयति । आर्य संघरक्षित प्रभातम् इदानीं सचेत् निष्कासयिष्यन्ति गमिष्यसि । अपि तु ननूक्तं भगवता । भयभैरवसहिष्णुना ते भवितव्यमिति । आयुष्मान् संघरक्षितः संलक्षयति । शोभनं कथयति । सचेत् स निष्कासयिष्यति गमिष्यामि । स संलक्षयति । ब्राह्मणा ह्येते ब्राह्मणप्रतिसंयुक्तं भाषयामीति । आयुष्मान् संघरक्षितो ब्राह्मणवर्गं स्वाध्यायितुमारब्धः ।

न नग्नचर्या न जटा न पङ्को
नानाशनं स्थण्डिलशायिका वा ।
न रजो मलं[1] नोत्कुटुकप्रहाणं
विशोधयेन्मोहम् अविशीर्णकाङ्क्षम् ॥
अलंकृतश्चापि चरेत धर्मं
दान्तेन्द्रियः शान्तः संयतो ब्रह्मचारी ।

1 Tib. 108b, l. 6: རྡུལ་དང་དྲི་མ་དང་ །

सर्वेषु भूतेषु निधाय दण्डं

स ब्राह्मणः स श्रमणः स भिक्षुः ॥[1]

तैः श्रुतम् । ते संलक्षयन्ति । ब्राह्मणप्रतिसंयुक्तम् अत इत्येक उपसंक्रान्तो द्वितीयस्तृतीयो यावत् सर्वे उपसंक्रान्ताः । तथा तया ेवतयाधिष्ठितं यथा परस्परं न पश्यन्ति । ततः पश्चादायुष्मता घरक्षितेन नगरोपमं[2] सूत्रमुपनिक्षिप्तम् । गाथां च भाषते ।

यानीह भूतानि समागतानि स्थितानि भूम्यामथवान्तरीक्षे ।

कुर्वन्तु मैत्रीं सततं प्रजासु दिवा च रात्रौ च चरन्तु धर्ममिति ॥[3]

1 Cf. *Dhammapada*, Daṇḍavagga:

न नग्गचरिया न जटा न पङ्का नानासका थण्डिलसायिका वा ।

रजोच जल्लं उक्कुटिकप्पधानं सोधेन्ति मच्चं अवितिण्णकंखम् ॥

अलंकतो चे पि समं चरेय्य सन्तो दन्तो नियतो ब्रह्मचारी ।

सब्बेसु भूतेसु निधाय दण्डं सो ब्राह्मणो सो समणो स भिक्खु ॥

Note: The stanzas are included in the Daṇḍavagga of the Pali version but in the Brāhmaṇa-varga of the Sanskrit.

Cf. *Mahāvastu*, III, p 412:

न मुण्डभावो न जटा न पंको नानासनं थण्डिलशायिका वा ।

रजोजलं वोत्कुट्ठकप्रहाणं दुःखप्रमोक्षं न हि तेन भोति ॥

अलंकृतो वापि चरेय धर्मं क्षान्तो दान्तो नियतो ब्रह्मचारी ।

सर्वेहि भूतेहि निवार्य दण्डं सो ब्राह्मणो सो समणो स भिक्षुः ॥

2 Tib. 109a—111a gives the Sūtra in extenso. This Sūtra deals with प्रतोत्यसमुत्पाद ।

3 Cf. Ratanasutta:

यानीध भूतानि समागतानि भुम्मानि वा यानि व अन्तलिक्खे ।

सब्बे व भूता सुमना भवन्तु अथो पि सक्कच सुणन्तु भासितम् ॥

Cf. *Mahāvastu*, I, p. 294:

यानीह भूतानि समागतानि भूम्यानि वा यानि व अन्तरीक्षे ।

मैत्रीकरोन्तु सद मनुष्यका प्रजा दिवं च रात्रिं च हरन्ति वो बलिम् ॥

अस्मिन् खलु धर्मपर्याये भाष्यमाणे सर्वैस्तैः सह सत्याभिसमयाद् अनागामिफलमनुप्राप्तम् ऋद्धिश्चापि निर्हृता। सर्वैस्तैः सुभाषितं भदन्त संघरक्षित सुभाषितमिति एकनादो मुक्तः। तया देवतया ऋद्ध्यभिसंस्काराः प्रतिप्रस्रब्धाः। ते परस्परं द्रष्टुमारब्धाः। अन्योन्यं कथयन्ति। त्वमपि आगतः। आगतोऽहम्। शोभनम्[1]। ते दृष्टसत्याः कथयन्ति। लभेम वयं भदन्त संघरक्षित स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेम वयं भगवतोऽन्तिके ब्रह्मचर्यम्। आयुष्मान् संघरक्षितः कथयति। किं मत्सकाशे प्रव्रजथ आहोस्विद् भगवतः। ते कथयन्ति। भगवतः। आयुष्मान् संघरक्षितः कथयति। यद्येवम् आगच्छथ भगवतः सकाशं गच्छामः। ते कथयन्ति। भदन्त संघरक्षित किमस्मदीयया ऋद्ध्या गच्छामः आहोस्वित् त्वदीयया। आयुष्मान् संघरक्षितः संलक्षयति। एभिर्मदीयेनाववादेनैवंविधा गुणगणा अधिगताः। अहं लङ्घनकोपमः संवृत्तः[2]। स कथयति। तिष्ठन्तु तावद् भवन्तो मुहूर्त्तम्। आयुष्मान् संघरक्षितोऽन्यतमं वृक्षमूलं निश्रित्य निषण्णः पर्यङ्कमाभुज्य ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य। उक्तं भगवता। पञ्चानुशंसा बाहुश्रुत्ये। [3]धातुकुशलो भवति। [4]प्रतीत्यसमुत्पादकुशलो भवति।

1 A few sentences have been omitted. See Tib. 112a, b.

2 Tib. 113a, l. 1 ; བདག་ཉི་གཟིངས་ལྟ་བུར་གྱུར་པ། =I have become similar to a ship.

3 In Tib. it is preceded by स्कन्धकुशलो भवति।

4 Tib. 113a. l. 3 inserts here आयतनकुशलो भवति।

स्थानास्थानकुशलो भवति। अ-परप्रतिबद्धा चास्य भवति अववादा-नुशासनीति[1]। तेनोद्‌यच्छता घटता व्यायच्छता सर्वक्लेशप्रहाणाद् अर्हत्त्वं साक्षात्कृतम् अर्हन् संवृत्तस्त्रैधातुकवीतरागः पूर्ववद् यावन्मान्यः पूज्यश्चाभिवाद्यश्च संवृत्तः। त आयुष्मता संघरक्षिते-नाभिहिताः। भवन्तो गृह्णीध्वं मदीयं चीवरकर्णिकं यास्यामः। [ते]आयुष्मतः संघरक्षितस्य चीवरकर्णिके लग्नाः। अथायुष्मान् संघरक्षितो विततपक्ष इव हंसराजस्तत एव ऋद्ध्या उपरि विहायसा प्रक्रान्ताः। यावत् तानि पञ्च वणिक्‌शतानि भाण्डं प्रतिशामयन्ति तेषामुपरि च्छाया निपतिता। स तैर्दृष्टः। ते कथयन्ति। आर्य संघरक्षित आगतस्त्वम्। आगतोऽहम्। कुत्र गच्छसि। स कथयति। इमानि पञ्च कुलपुत्रशतानि आकाङ्‌क्षन्ति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। ते कथयन्ति। आर्य संघरक्षित वयमपि प्रव्रजिष्यामः। अवतरस्व यावद् भाण्डं प्रतिशामयाम इति। आयुष्मान् संघरक्षितोऽवतीर्णः। तैर्भाण्डं प्रतिशामितम्। अथायुष्मान् संघरक्षितस्तत्कुलपुत्रसहस्रमादाय येन भगवांस्तेन, उपसंक्रान्तः।

तेन खलु समयेन भगवाननेकशताया भिक्षुपर्षदः पुरस्तात् निषण्णो धर्मं देशयति। अद्राक्षीद् भगवानायुष्मन्तं संघरक्षितम्। दूरादेव दृष्ट्वा च पुनर्भिक्षूनामन्त्रयते स्म। एष भिक्षवः संघरक्षितो भिक्षुः सप्राभृत आगच्छति। नास्ति तथागतस्यैवंविधं

1 Tib. 113a. I. 3 : དེའི་གདམས་ངག་དང་རྗེས་ སུ་བསྟན་པ་གཞན་ལ་རག་མ་ལས་པ་ཡིན་ནོ།

प्राभृत यथा वैनेयप्राभृतम्। आयुष्मान् संघरक्षितो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णः आयुष्मान् संघरक्षितो भगवन्तमिदमवोचत्। इदं भदन्त कुलपुत्रसहस्रमाकाङ्क्षति स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। तं भगवान् प्रव्राजयतु उपसंपादयत्वनुकम्पामुपादाय। ते भगवता एहिभिक्षुकया आभाषिताः। एत भिक्षवश्चरत ब्रह्मचर्यम्। भगवतो वाचावसाने मुण्डाः संवृत्ताः संघाटीप्रावृताः सप्ताहावरोपितकेशश्मश्रवः पात्र-करकव्यग्रहस्ता वर्षशतोपसंपन्नस्य भिक्षोरीर्यापथेनावस्थिताः।

एहीति चोक्ता हि तथागतेन मुण्डाश्च संघाटिपरीतदेहाः।
सद्यः प्रशान्तेन्द्रिय एव तस्थुर्नैव स्थिता[1] बुद्धमनोरथेन॥

भगवता तेषामववादो दत्तः। तैरुद्यच्छमानैर्घटमानै-र्व्यायच्छद्भिः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्तः संवृत्तास्त्रैधातुकवीतरागाः पूर्ववद् यावन्मान्याश्च पूज्याश्चाभिवाद्याश्च संवृत्ताः।

आयुष्मान् संघरक्षितो बुद्धं भगवन्तं पृच्छति। इहाहं भदन्त सत्त्वानद्राक्षं कुड्याकारान् स्तम्भाकारान् वृक्षाकारान् पत्राकारान् पुष्पाकारान् फलाकारान् रज्ज्वाकारान् संमार्जन्या-कारान् खट्वाकारान्[2] उदूखलाकारान् स्थालिकाकारान् मध्येऽव-

1 Tib. 114a, l, 4: འདས་གཟུགས་བཀའ་བར་གྱུར། Cf. *Gilgit Manuscripts*, vo. III, pt i, p. 25.

2 Tib. 114b, l. 1: ཕར་པ=सरक, a drinking vessel. Cf. *Journal Asiatique*, 1932, p. 18.

च्छिन्नस्तन्तुना धार्यमाणो गच्छति। कस्य कर्मणो विपाकेन। भगवान् आह। यांस्त्वं संघरक्षित सत्त्वान् अद्राक्षीः कुड्याकारान् ते काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। तैः सांघिकं कुड्यं श्लेष्मणा शिंघाणकेन विनाशितम्। ते तस्य कर्मणो विपाकेन कुड्याकाराः संवृत्ताः। यथा कुड्याकारा एवं स्तम्भाकाराः सत्त्वाः। यान् संघरक्षित सत्त्वान् अद्राक्षीर्वृक्षाकारान् ते काश्यपस्य सम्यक्संबुद्धस्य श्रावका आसन्। तैः सांघिकाः पुष्पवृक्षाः फलवृक्षाः पौद्गलिक-परिभोगेन भुक्ताः। ते तस्य कर्मणो विपाकेन वृक्षाकाराः संवृत्ताः। यथा वृक्षाकारा एवं पत्राकाराः फलाकाराः पुष्पाकाराः। यं त्वं संघरक्षित सत्त्वमद्राक्षी रज्ज्वाकारं स काश्यपस्य सम्यक्संबुद्धस्य श्रावक आसीत्। तेन सांघिका रज्जुः पौद्गलिक-परिभोगेन परिभुक्ता। स तस्य कर्मणो विपाकेन रज्ज्वाकारः संवृत्तः। यथा रज्ज्वाकार एवं संमार्जन्याकारः। यं त्वं संघरक्षित सत्त्वमद्राक्षीर्घटाकारं [स] काश्यपस्य सम्यक्संबुद्धस्य श्रावक असीच्छ्रामणेरकः। सोऽपरेण समयेन पानकवारमुद्दिष्टस्तद् वारकं निर्मादयति। आगन्तुकाश्च भिक्षव आगताः। स तैः पृष्टः। श्रामणेरक किं संघस्य पानकं भविष्यति। स कथयति नास्तीति। ते निराशीभूताः प्रक्रान्ताः। स तस्य कर्मणो विपाकेन घटाकारः संवृत्तः। यं त्वं संघरक्षित सत्त्वमद्राक्षीरुदूखलाकारं स काश्यपस्य सम्यक्संबुद्धस्य श्रावक आसीत्। तस्य पापकर्म प्रत्युपस्थितम्। तत्रैकः श्रामणेरक एकोऽर्हन्। स तेनोक्तः।

श्रामणेरक ददस्व मे खलस्तोकं कुट्टयिष्यामि। स कथयति। स्थविर तिष्ठ तावन्मुहूर्त्तं व्यग्रोऽहं पश्चाद् दास्यामीति। सः आमर्षजातः कथयति। श्रामणेरक यदि रोचते त्वामेवाहमस्मिन्नुदूखले प्रक्षिप्य कुट्टये प्रागेव खलस्तोकम्। यत तदर्हतोऽन्तिके खरं वाक्कर्म निश्चारितम्। स तस्य कर्मणो विपाकेन उदूखलाकारः संवृत्तः। यांस्त्वं संघरक्षित सत्त्वानद्राक्षीः स्थाल्याकारांस्ते काश्यपस्य सम्यक्संबुद्धस्य कल्पिकारका आसन्। ते भिक्षूणां भैषज्यानि क्वाथयमानाः स्थालिकां भञ्जते। तेषां भिक्षूणां विघातो भवति। ते तस्य कर्मणो विपाकेन स्थाल्याकाराः संवृत्ताः। यं त्वं संघरक्षित सत्त्वमद्राक्षीर्मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति स काश्यपस्य सम्यक्संबुद्धस्य प्रवचने प्रव्रजित आसील्लाभग्राहिकः। तेन यद् वार्षिकं लाभं तद् हैमन्तिकं परिणामितं यद् हैमन्तिकं तद् वार्षिकम्। तस्य कर्मणो विपाकेन मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति[1]।

1 See Tib. 116a, l. 2.

In the *Divyāvadāna* (p. 344), the *Saṃgharakṣitāvadāna* is ended here. As already stated in my Introduction to Vol. III, pt. ii of the *Gilgit Manuscripts*, the portion of the ms., containing the *Saṃgharakṣitāvadāna*, was in the possession of Prof. Sylvain Lévi, who did not reproduce the same in the *Journal Asiatique* (1932), in which appeared the matter contained in the leaves following those of the *Saṃgharakṣitāvadāna*. In order to complete this volume as far as possible the *Saṃgharakṣitāvadāna* has been reproduced from the *Divyāvadāna* (pp. 329-343). On collation with the Tibetan version of the *Dul-va*, it appears that the compiler of the *Divyāvadāna* omitted or separated certain portions here and there. It will be observed that the story in the *Divyāvadāna* has been opened abruptly with the words: *kiṃ mahallenādhigataṃ* (See above, p. 27). In Cowell's edition or probably in the original Nepalese ms., the concluding portions of the *Saṃgharakṣitāvadāna* have been separated, and one of the portions has been named "*Nāgakumārāvadāna*" while the other portion has been left without any heading. In the *Dul-va* the 25th Avadāna (see *Divyā.*, pp. 346-348) is placed immediately after the 23rd while the 24th (*Nāgakumārāvadāna* in *Divyā.*, pp 344-346) appears next.

भिक्षवः[1] संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति । किं भदन्तायुष्मता संघरक्षितेन कर्म कृतं यस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले जातो भगवतोऽन्तिके प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतमेवं तं च वैनेयकार्यं कृतम् । भगवानाह । संघरक्षितेनैव भिक्षवः कर्माणि कृतान्युपचितानि पूर्ववत्[2] ।

भूतपूर्वं [3]भिक्षवोऽस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता पूर्ववत् । तस्यायं शासने प्रव्रजित आसीद् वैयावृत्यकरः । अस्य तत्र पञ्च सार्धविहारिशतानि यद्भूयसा एककर्वटनिवासी जनकायोऽस्यैवाभिप्रसन्नः । अनेन तत्र यावदायुःपर्यन्तं ब्रह्मचर्यं चीर्णं न कश्चिद् गुणगणोऽधिगतः । अपरेण समयेन ग्लानीभूतो मूलगण्डपत्रपुष्पफलभैषज्यैरुपस्थीयमानो हीयत एव । मरणसमये प्रणिधानं कर्त्तुमारब्धः । यन्मया काश्यपे भगवति सम्यक्सम्बुद्धेऽनुत्तरे महादक्षिणीये यावदायुर्ब्रह्मचर्यं चीर्णं न कश्चिद् गुणगणोऽधिगतोऽनेनाहं कुशलमूलेन योऽसौ भगवता काश्यपेन सम्यक्संबुद्धेनोत्तरो नाम माणवो व्याकृतो भविष्यसि त्वं माणव वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतोऽर्हन् . सम्यक्संबुद्ध इति तस्य शासने[4] प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्याम् ।

1 See *Divyā.*, p, 346; Tib. 116a, l. 2.

2 Cf. *Gilgit Manuscripts.* vol III, pt. i, p. 108.

3 See Tib. 116a, l. 7.

4 *Divyā.*, p. 346 : ०नोत्तरोनाम माणवो वर्षशतायुषि प्रजायां अवश्यभागीयकस्य भाव्यतायां बुद्धो व्याकृतः तस्य शासने ।

ततः पश्चात् सार्धंविहारिण उपसंक्रान्ताः। ते कथयन्ति। उपाध्यायास्ति किंचित् त्वया गुणगणमधिगतम्। स कथयति। नास्ति। किं प्रणिधानं कृतम्। इदं चेदं च। ते कथयन्ति। वयमप्युपाध्याय एवमेवं कल्याणमित्रमागम्य तस्यैव भगवतोऽन्तिके सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्युः[1]। कर्वटनिवासिना जनकायेन श्रुतं ग्लान आर्यक इति। तेऽप्युपसंक्रान्ताः। अस्ति किंचिदार्येण गुणगणमधिगतम्। नास्ति। किं प्रणिधानं कृतम्। इदं चेदं च। ते कथयन्ति। वयमप्यार्यमेवं कल्याणमित्रमागम्य तस्यैव भगवतोऽन्तिके सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कुर्युः[1]।

किं मन्यध्वे भिक्षवः। योऽसौ वैयावृत्यकर एष एवासौ संघरक्षितो भिक्षुः। यानि तानि पञ्च सार्धंविहारिशतान्येतान्येव तानि पञ्च वणिक्शतानि। यदनेन तत्र धर्मवैयावृत्यं कृतं तस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले उपपन्नः। यत्तन्मरणसमये प्रणिधानं कृतं तस्य कर्मणो विपाकेन ममान्तिके प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतमेवं च वैनेयकार्यं कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववत्[2]।

भिक्षवः[3] संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति। कुतो भदन्त तेन नागकुमारेण तत्प्रथमतः श्रद्धाः

1 Ms. कुर्युः for कुर्याम्

2 *Divyā.*, p. 348.

3 *Divyā.*, p. 344.

प्रतिलब्धाः। भगवानाह। भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोक उत्पन्न-स्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोक-विदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स एव श्रावकाणां धर्मं देशयति। एतानि भिक्षवोऽ-रण्यानि शून्यागाराणि पर्वतकन्दरगिरिगुहापलालपुञ्जाभ्यवकाश-श्मशानवनप्रस्थानि प्रान्तानि शयनासनानि ध्यायत भिक्षवो मा प्रमाद्यत मा पश्चाद् विप्रतिसारिणो भूतेदमस्माकमनुशासनम्। तत्र केचिद् भिक्षवः सुमेरुपरिषण्डायां गत्वा ध्यायन्ति। केचि-न्मन्दाकिन्याः पुष्करिण्यास्तीरे। केचिदनवतप्ते महासरसि। केचित् सप्तसु काञ्चनमयेषु पर्वतेषु। केचित् तासु ग्रामनिगम-राष्ट्रराजधानीषु गत्वा ध्यायन्ति।

अन्यतमश्च अचिरजातको नागकुमारः सुपर्णिना पक्षिराजेन सुमेरुपरिषण्डायामुपरिष्टादपह्रियते। यावत् तेन भिक्षवो ध्याना-ध्ययनयोगमनसिकारयुक्ता विहरन्तो दृष्टाः। दृष्ट्वा चास्य चित्त-मभिप्रसन्नम्। प्रसादजातः संलक्षयति। मुक्ता ह्येते आर्यकाः। एवंविधाद्दुःखात् च्युतः कालगतो वाराणस्यां षट्कर्मनिरते ब्राह्मणकुले जात उन्नीतो वर्धितो महान् संवृत्तः। सोऽपरेण समयेन काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजितः। तेनोद्यच्छता घटता व्यायच्छता सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तः। पूर्ववद् यावन्मान्यश्च पूज्यश्च चाभिवन्द्यश्च संवृत्तः। स संलक्षयति। कुतोऽहं च्युतः। तिर्यक्षु। कुत्रोपपन्नः।

मनुष्येषु। कुत्र मम मातापितरौ। यावत् पश्यति नागभवने रुदन्तौ तिष्ठतः। स तत्र गतः। गत्वा पृच्छितुमारब्धः। अम्ब तात कस्यार्थे रुदितः। तौ कथयतः। आर्य अचिरजातकोऽस्माकं नागकुमारः सुपर्णिना पक्षिराजेनापहृतः। स कथयति। अहमेवासौ। आर्य तादृशः स दुष्टनागो यद् वयं सुगतिगमनमपि न संभावयामः। प्रागेवेदृशानां धर्माणां लाभी भविष्यति। तेन तौ स्मारितौ पादयोर्निपत्य कथयतः। आर्य एवंविधास्त्वया गुणगणा अधिगताः। आर्य त्वं पिण्डकेनार्थी वयं पुण्येनार्थिकाः। इहैव त्वमागम्य दिवसे दिवसे भक्तकृत्यं कृत्वा गच्छ। स नागभवने दिव्यां सुधां परिभुक्त्वागच्छति। तस्य श्रामणेरकः सार्धंविहारी। स भिक्षुभिरुक्तः। श्रामणेरक अयं ते उपाध्यायः कुत्र भुक्त्वा भुक्त्वा आगच्छति। स कथयति। नाहं जाने। ते कथयन्ति। नागभवने दिव्यां सुधां परिभुज्य परिभुज्यागच्छति। त्वं कस्यार्थे न गच्छसि। स कथयति। अयं महर्धिको महानुभावो येन गच्छति कथमहं गच्छामि। ते कथयन्ति। यदायमृद्ध्या गच्छति तदा त्वमस्य चीवरकर्णिकं गृहाण। स कथयति। मा पतेयम्। ते कथयन्ति। भद्रमुख यदि सुमेरुः पर्वतराजा चीवरकर्णिकमवलम्बते नासौ पतेत् प्रागेव त्वं पतिष्यसीति। यो यस्मिन् स्थानेऽन्तर्धास्यति तेन तत्र निमित्तमुद्गृहीतम्। स तत्प्रदेशं पूर्वमेव गत्वावस्थितः। स चान्तर्धास्यतीति तेन चीवरकर्णिकं गृहीतम्। तावुपरि विहायसा प्रक्रान्तौ यावत् तौ नागैर्दृष्टौ। तयोर्द्वे आसने प्रज्ञप्तिकृते द्वौ मण्डल-

काश्यपमार्जितौ। स संलक्षयति। कस्यार्थेऽयमपर आसनः प्रज्ञप्तः।-स प्रतिनिवृत्य पश्यति यावच्छ्रामणेरकम्। स कथयति। भद्रमुख त्वमप्यागतः। उपाध्यायागतोऽहम्। शोभनम्। नागाः संलक्षयन्ति। अयमार्यो महर्धिको महानुभावः। शक्यते[1] दिव्यां सुधां धारयितुम्। अयमन्यो न शक्यते[1]। तैस्तस्य दिव्या सुधा दत्ता तस्यापि प्राकृत आहारः। स तस्य पात्रग्राहकः। तेन तस्य पात्रं गृहीतं यावत् तत्रैक ओदनोऽभिषक्तोऽवतिष्ठते। स तेनास्ये प्रक्षिप्तो यावद् दिव्यमास्वादनम्। स संलक्षयति। ईदृशा अपि मत्सरिणो नागाः। एकध्ये निषण्णयोरस्य दिव्या सुधा दत्ता ममापि प्राकृत आहारः। स प्रणिधानं कर्तुमारब्धः। यन्मया भगवति काश्यपे सम्यक्संबुद्धेऽनुत्तरे महादक्षिणीये ब्रह्मचर्यं चीर्णमनेनाहं कुशलमूलेनैतं नागम् अस्माद्भवनाच्चयावयित्वात्रैवोपपद्येयेति। तस्य दृष्ट एव धर्मे उभाभ्यां पाणिभ्यां जलं स्यन्दितुमारब्धम्। नागस्यापि शिरोऽर्त्तिर्बाधितुमारब्धा। स कथयति। आर्यानेन श्रामणेरकेणाशोभनचित्तमुत्पादितम्। प्रतिनिवर्तापयित्वेनम्। स कथयति। भद्रमुखापाया ह्येते निवर्तय चित्तम्। स गाथां भाषते।

प्रवणीभूतमिदं चित्तं न शक्नोमि निवारयितुम्।
इहस्थस्यैव मे भदन्त पाणिभ्यां स्यन्दते जलम्॥

स तं नागं तस्माद्भवनाच्चयावयित्वा तत्रैवोपपन्नः। तत्र भिक्षवस्तेन नागकुमारेण तत्प्रथमतः श्रद्धा प्रतिलब्धा[2]।

1 It should be शक्नोति

2 Tib, 119b, l. 1- See *Divyā* p. 346: end of *Nāgakumārāvadāna*.

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे। यावदन्यतमस्तीर्थ्यो जेतवनं गतः[1]। तत्र तेन दृष्टा शोभनासनप्रज्ञप्तिः कृता प्रणीतं चान्नपानमुपान्वाहृतम्। स संलक्षयति। शोभनः श्रमणशाक्यपुत्रीयाणामामिषसंभोगः। अस्माकं तु शोभनो धर्मसंभोगः। तदेषां मध्ये प्रव्रजामीति। इह य आमिषसंभोगस्तत्र धर्मसंभोग इति। स भिक्षोः सकाशमुपसंक्रान्तः। आर्य इच्छामि प्रव्रजितुम्। स तेन प्रव्रजितोपसंपादितः। तीर्थ्यानां पोषधश्चातुर्दशिको भिक्षूणां च पांचदशिकः। स चतुर्दश्यां तीर्थिकानामन्तिके पोषधं प्रत्यनुभवति पंचदश्यां भिक्षूणाम्। यावदपरेण समयेन ऊनरात्रीपतितो भिक्षूणामपि चातुर्दशिकः पोषधो जातः। तस्य संशय उत्पन्नः। किं तत्र गच्छामि आहोस्विदिहैव पोषधं प्रत्यनुभवामीति। तस्य बुद्धिरुत्पन्ना। अमी श्रमणाः शाक्यपुत्रीयाः सुरताः सुखसंवासा मम सब्रह्मचारिणो दुःशीला दुःखसंवासाः। सचेन्न गमिष्यामि स्थानमेतद् विद्यते यच्छलाका मे पातयिष्यन्ति फलकं[2] संपरिवर्तयिष्यन्ति खोरं[3] निकुब्जयिष्यन्ति सब्रह्मचारिमध्यादुद्धरिष्यन्ति। स तीर्थ्यानां मध्ये गतो यावदुपधिवारिको वृद्धान्ते स्थितो भिक्षून् समनुयुङ्क्ते तं न पश्यति। स प्रष्टुमारब्धः। आयुष्मन्त एवंनामा कश्चिद् भिक्षुरागतश्छन्दो वास्यानीतः। ते कथयन्ति नास्तीति। उक्तं

1 See Tib. 119b, l. 2.

2 Tib. 119b. l 6: སྤྱང་ལེབ་ཁྲིའུ =wooden seat.

3 Tib. 119b, l. 7: སྤྱོང་ཚོར =भिक्षापात्रम्

भगवता। चतुर्दिशं व्यवलोक्य पोषधः कर्त्तव्य इति। तैर्भिक्षुभिश्चतुर्दिशं व्यवलोक्य पोषधः कृतः। ततः पश्चाद् द्वितीये दिवसे भिक्षुरागतः। स भिक्षुभिरुक्तः। कुतस्त्वमागतः। स कथयति। सब्रह्मचारिणामन्तिकात्। के तव सब्रह्मचारिणः। तीर्थ्याः। मम युष्माकमन्तिके आमिषसंभोगस्तेषामन्तिके धर्मसंभोग इति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। तत्र भगवान् भिक्षूनामन्त्रयते स्म। तीर्थिकावक्रान्तकोऽयं पुद्गलः। नाशयत यूयं भिक्षवस्तीर्थिकावक्रान्तकं पुद्गलम्। अप्ररोहणधर्मा[1] भिक्षवस्तीर्थिकावक्रान्तः पुद्गलोऽस्मिन् धर्मविनये। तस्मात् तर्हि भिक्षवो यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति स तेन प्रष्टव्यो मासि तीर्थिकावक्रान्तक इति। अपृष्ट्वा प्रव्राजयति सातिसारो भवति। आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति यद् उक्तं भदन्त भगवता तीर्थिकावक्रान्तकः पुद्गलो नाशनार्ह इति। कियता भदन्त तीर्थिकावक्रान्तकः पुद्गलो नाशनार्हः। यतश्चोपालिन् तीर्थ्य इमं ध्वजं धारयति तं च दृष्टिं रोचयते तत्र चारुणमुद्गमयति[2]। इयता तीर्थिकावक्रान्तकः पुद्गलो नाशनार्हः।

श्रावस्त्यां निदानम्। श्रावस्त्यामन्यतमो गृहपतिः। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः

1 Tib. 120, l. 4 : མི་སྐྱེ་བའི་ཆོས།

2 Tib. 120a, l. 7 : དེར་སྐྱ་རེངས་འཆར་བར་བྱེད་ན།

पुत्रो जातः। स पत्नीमामन्त्रयते। भद्रे जातोऽस्माकमृणहरो धनहरः। गच्छाम्यहं पण्यमादाय देशान्तरम्। सा कथयति। आर्यपुत्र एवं कुरु। स पण्यमादाय देशान्तरं गतः। तत्रै-वानयेन व्यसनमापन्नः। तयाप्यसौ पुत्रो ज्ञातिबलेन हस्तबलेना-पायितः पोषितः संवर्धितः। सोऽपरेण समयेन वयस्यकेन सार्धमन्य-तमस्य गृहसमीपे गच्छति। तस्मिन् गृहे दारिका च तिष्ठति। तया तस्योपरि स्रग्दामं क्षिप्तम्[1]। तेन सा दृष्टा। वयस्यकेनाभिहितः। वयस्य मा त्वमस्मिन् गृहे कृतसंकेतः। स कथयति। आं[2] कृतसंकेतोऽहम्। स कथयति। वयस्य विषममेतद् गृहं मा प्रवेक्ष्यसि मा अनयेन व्यसनमापत्स्यत इति। स तेन सकलं दिवसं भ्रामयित्वा मातुः सकाशं नीतः। अम्ब अयं ते पुत्रः अमुष्मिन् गृहे कृतसंकेतो मया कृत्स्नं दिवसं रक्षितः। त्वमिदानीं रात्रिं रक्षस्व। विषमं तद्गृहं मा प्रवेक्ष्यसि मा अनयेन व्यसनमा-पत्स्यत इति। सा कथयति। पुत्र शोभनं ते कृतं यदस्माकमारोचि-तम्। तया तस्यावरके शय्या प्रज्ञप्ता। द्वौ कर्परकौ[3] प्रवेशितौ पानीयं च मृत्तिका च। तस्मिन्नववरके प्रवेशयित्वात्मनो द्वारे खट्वा प्रज्ञपयित्वा शयिता। स कथयति। अम्ब द्वारं देहि। पुत्र कस्यार्थे। प्रस्रावं करिष्यामि। सा कथयति। पुत्र अत्रैव मया कर्परकः प्रवे-शितः। तत्र प्रस्रावं कुरु। स मुहूर्तं स्थित्वा कथयति। अम्ब द्वारं प्रयच्छ। कस्यार्थे। उच्चारभूमिं गमिष्यामि। सा कथयति। पुत्र

1 Tib. 120b, l. 4. 2 Tib. 120b, l. 4 : དེ་ཡིན་ཏེ །

3 Tib. 120b, l. 6 : གྱོ་མོ ; =potsherd.

अत्रैव मया कर्परको मृत्तिका पानीयं च प्रवेशितम्। अत्रवोच्चारं कुरु। स पुनरपि मुहूर्तं स्थित्वा कथयति। अम्ब द्वारमनुप्रयच्छ। सा कथयति। पुत्र किमहं न जाने यत्र त्वं गन्तुकामः। न शक्यं मया द्वारं दातुम्। अम्ब अहं ते प्रघातयिष्ये। सा कथयति। पुत्र श्रेयोऽहं[1] म्रिये न त्वेवाहं पुत्रवधं पश्यामि। कामान् खलु प्रतिसेवमानस्य नास्ति किंचित् पापकं कर्माकरणीयमिति। तेन निर्घृणहृदयेन त्यक्तपरलोकेन उत्कोशमसिं कृत्वा तस्या उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातितम्। स तां प्रघात्य गतः। पापकारी सत्त्वो वेपते। स तया दारिकयाभिहितः। आर्यपुत्र मा भैषीः नास्त्यत्र काचिद् दारिकाद्वितीया। स संलक्षयति। आरोचयिष्याम्यस्याः प्रियो भविष्यामि। स कथयति। भद्रे मया त्वदर्थं माता प्रघातिता। सा कथयति। किं धात्री आहोस्विज्जनित्री। स कथयति। जनित्री। सा संलक्षयति। यो नाम गुणानामनभिज्ञो भूत्वा मातरं प्रघातयति यदा ममान्तिके प्रकोपं जनयिष्यति का मे समवस्था भविष्यति। सा कथयति। आर्यपुत्र तिष्ठ तावद् उपरिमं तलकमभिरुह्यागच्छामि। स कथयति। एवं कुरु। तया उपरिमं तलमभिरुह्य चोरश्चोर इति शब्दः कृतः। स भीतो भयेन निष्पलायितः। आत्मीयं गृहं[1] गत्वा द्वारमूलेऽसिं प्रक्षिप्य—अयं स चोरो मातरं मे प्रघात्य निष्पलायित इति। स तां मातरं सत्कार्य गतः। पापकर्मकारी सत्त्वो धृतिं न लभते। स तानि तीर्थानि तपोवनानि गत्वा पप्रच्छ भवन्तः किं कर्म क्रियते येन पापकं

1 Tib. 121a, l. 6 : རང་གི་ཁྱིམ་དུ = स्वगृहं

कर्म क्षयं गच्छेत्। तत्र कश्चित् कथयति। अग्निं प्रविश। कश्चित् कथयति। प्रपाते प्रपत। कश्चित् कथयति। उदके। कश्चित् कथयति। रज्ज्ववबद्धा म्रियस्वेति। सर्वे ते मरणोपायं दर्शयन्ति। न च कश्चित् निस्सरणोपायम्। सोऽपरेण समयेन जेतवनं गतः। स तत्र पश्यति भिक्षुं स्वाध्यायं कुर्वन्तम्।

यस्य पापकृतं कर्म कुशलेन पिधीयते।

सोऽस्मिन्नाभासते लोके मुक्तोऽभ्रादिव चन्द्रमाः[1] ॥ इति।

स संलक्षयति। शक्यं पापकर्म पिधातुं नो तु क्षपयितुम्। एषां मध्ये प्रव्रजामि क्षपयिष्यामीति। स भिक्षोः सकाशमुपसंक्रान्तः। आर्य प्रव्रजितुमिच्छामि। स तेन प्रव्राजित उपसंपादितः। सोऽत्यर्थमारब्धवीर्यः स्वाध्यायतः पठितुमारब्धः। तेन पठता त्रीणि पिटकान्यधीतानि। त्रिपिटः संवृत्तो धार्मकथिको युक्तमुक्तप्रतिभानः। स भिक्षुभिरुक्तः। आयुष्मन् किं त्वमनेन वीर्येण प्रार्थयसे। स कथयति। पापं कर्म क्षपयामि। किं त्वया पापं कर्म कृतम्। माता प्रघातिता। किं धात्री अहोस्विज्जननी। स कथयति। जननी। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। तत्र भगवान् भिक्षूनामन्त्रयते स्म। नाशयत यूयं भिक्षवो मातृघातकं पुद्गलमस्माद् धर्मविनयात्। अप्ररोहणधर्मो भिक्षवो मातृघातः पुद्गलोऽस्मिन् धर्मविनये। तस्मात् तर्हि भिक्षवो यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति स तेन प्रष्टव्यो

1 Cf. *Dhammapada*, Lokavagga :

यस्स पापं कतं कम्मं कुसलेन पिधीयति।

सो इमं लोकं पभासेति अब्भा मुत्तो व चन्दिमा ॥

मसि मातृघातक इति। अपृष्ट्वा प्रव्राजयति सातिसारो भवति। स संलक्षयति। किमिदानीमेव प्रव्रजिष्यामि प्रत्यन्तं गच्छामीति। तेन प्रत्यन्तं गत्वान्यतमो गृहपतिरन्वावर्तितः। तेनाभिप्रसन्नेन तमुद्दिश्य विहारः कारित इति। स नानादिग्देशनिवासिभिर्भिक्षुभिरावासितः। तस्य चाववादेन प्रभूतैरर्हत्त्वं साक्षात्कृतम्। सोऽपरेण समयेन ग्लानः संवृत्तः। स मूलगण्डपत्रपुष्पफलभैषज्यैरुपस्थीयमानो हीयत एव। तेन सार्धंविहारिण उक्ताः। आयुष्मन्तो जेन्ताकं[1] मे उद्दिश्य कुरुत। तैस्तमुद्दिश्य जेन्ताकः कृतः।

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्[2]॥ इति।

[स] च्युतः कालगतः अवीचौ महानरके उपपन्नः। तस्य सार्धंविहारी अर्हन् समन्वाहर्तुं प्रवृत्तः कुत्र मे उपाध्याय उपपन्न इति। स देवान् व्यवलोकयितुमारब्धो न पश्यति। मनुष्यान् तिरश्चः प्रेतांस्तत्रापि न पश्यति। यावन्नरकान् व्यवलोकयितुमारब्धः पश्यति अवीचौ महानरके उपपन्नः। स संलक्षयति। उपाध्यायः शीलवान् बहुश्रुतो धर्मेण पार्षदान् संगृह्णीते। किं तेन कर्म कृतं येनावीचौ महानरके उपपन्न इति। स समन्वाहर्तुं प्रवृत्तो यावत् पश्यति मातृघातक इति सोऽप्यवीचिके रश्मिभिः स्पृष्टः। स कथयति। अतितीक्ष्णोऽयं जेन्ताकाग्निसंताप इति। ततो नरकपालेन मुद्गरेण शिरसि प्रहारं दत्त्वा उक्तः। मन्दभाग्य कुतस्तेऽत्र जेन्ताकोऽवीचि-

1 Tib. 122a, l. 3: བསྲོ་ཁང = Chamber for hot bath.

2 Cf. *Mahāvastu*, III, p. 183; *Divyāvadāna*, p. 100.

रयं महानरकः। स मुद्गराभिहतः कुशलचित्तः कालगतश्चातु-र्महाराजकायिकेषु देवेषूपपन्नः। धर्मता खलु देवपुत्रस्य वा देवकन्याया वा अचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते। कुत-श्च्युतः कुत्रोपपन्नः केन कर्मणेति। स पश्यति। नरकेभ्यश्च्युत-श्चातुर्महाराजिकेषु देवेषूपपन्नः संघजेन्ताकस्नानं[1] कृत्वेति। अथ नरकपूर्विणो देवपुत्रस्यैतदभवत्। न मम प्रतिरूपं स्याद् यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रमेयं यन्न्वहमपर्युषित-परिवास एवं भगवन्तं दर्शनायोपसंक्रमेयमिति। अथ नरकपूर्वी देवपुत्रश्चलविमलकुण्डलधरो हारार्धहारविभूषितगात्रो दिव्यानामु-त्पलकुमुदपुण्डरीकमान्दारवाणां पुष्पाणामुत्सङ्गं पूरयित्वा अति-क्रान्तवर्णोऽतिक्रान्तायां रात्र्यां येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तं च पुष्पैरवकीर्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। अपीदानीं नरकपूर्विणो देवपुत्रस्यानुभावेन सर्वा कूटागारशाला उदारेणावभासेन स्फुटाभूत्। ततो भगवता नरकपूर्विणो देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता। यां श्रुत्वा नरकपूर्विणा देवपुत्रेण तस्मिन्नेवासने निषण्णेन विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। स दृष्टसत्य उदानमुदानयति।

[1] Tib. 122b, l. 2: དགེ་འདུན་ལ་བསྒྲོ་ཁང་གི་ཁྲུས་བྱས་པས =स्नानागारम्।

इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैः कृतं[1] न स्वजनबन्धुवर्गेण यद् भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्रा लंघिताः अस्थिपर्वताः पिहितानि अपायद्वाराणि विवृतानि स्वर्गमोक्ष-द्वाराणि उद्धृतो नरकतिर्यक्प्रेतेभ्यः पादः प्रतिष्ठापितो देव-मनुष्येषु। आह च।

तवानुभावात् पिहितः सुघोरो
　　ह्यपायमार्गो बहुदोषयुक्तः[2]।
अपावृता स्वर्गगतिः सुपुण्या
　　निर्वाणमार्गश्च मयोपलब्धः॥
त्वदाश्रयावाप्तमपेतदोषं
　　मयाद्य शुद्धं सुविशुद्धचक्षुः।
प्राप्तं च शान्तं[3] पदमार्यकान्तं
　　तीर्णश्च दुःखार्णवपारमस्मि॥
जगति दैत्यनरामरपूजित
　　विगतजन्मजरामरणाभय।
भवसहस्रसुदुर्लभदर्शन
　　सफलमद्य मुने तव दर्शनम्॥
अवनम्य ततः प्रलम्बहार-
　　श्चरणौ द्वावभिवन्द्य जातहर्षः।

1 Tib. 123a, l. 2 *Divyā.*, p. 52 दुष्ट 3 *Divyā.* कान्तं

प्रणिपत्य च दक्षिणं जितारिं
सुरलोकाभिमुखो दिवं जगाम[1] ॥

अथ नरकपूर्वी देवपुत्रो वणिगिव लब्धलाभः शस्यसम्पन्न इव कार्षिकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागतस्तयैव विभूत्या स्वभवनं गतः। तस्य सार्धंविहारी संघस्थविरोऽर्हन्[2] भक्ताग्रे निषण्णोऽन्यश्च सार्धंविहारी संघपानीयं चारयति। यावत् तेन संघस्थविरेण पानीयं कांसिकायां गृह्णता अङ्गुल्यग्रेण स्पृष्टमतिशीतलम्। स संलक्षयति। यन्नाम ईदृशं पानीयं पिवाम उपाध्यायोऽप्यवीचौ महानरके क्वथितं ताम्ररसं पास्यतीति। सोऽवीचिं महानरकं व्यवलोकयितुमारब्धो न पश्यति। तिरश्चः प्रेतांश्च मनुष्यानन्यांश्च नरकान्। तेष्वपि न पश्यति। यावद् देवान् व्यवलोकयितुमारब्धः पश्यति चातुर्महाराजिकेषु देवेषूपपन्नः। देवभूतेन च भगवतोऽन्तिके सत्यदर्शनं कृतं देवेषु चावतिष्ठन्तम्। स्मिते[3] पूर्वङ्गमो भगवति लब्धप्रसाद उदानमुदानयत्। अहो बुद्धः अहो धर्मः अहो संघः अहो धर्मस्य स्वाख्यातता यत्रेदानीमेवंविधा अपि पापकारिणो विनिपातं गता एवंविधं गुणगणमधिगच्छन्तीति। स तेन [4]समानोपाध्यायेन हृष्टतुष्टप्रमुदितो

1 See *Divyā*, p. 52.
2 Tib. 123a, l. 7.
3 Tib. 123b, l. 4 : འཛུམ་པ་སྔོན་དུ་བཏང་སྟེ།
4 Ms. समंन ; Tib. 123b, l. 5 : མཁན་པོ་གཅིག་པ་དེས་དེ་རངས་ཞིང་མགུ་པ་དང་།

दृष्ट उक्तश्च । आयुष्मन् किं परितुष्टोऽसि उपाध्यायः कालगतोऽहं संघस्थविरो जात इति । स कथयति । आयुष्मन् [न कालस्तावत् ते प्रश्नस्य व्याकरणाय । संघमध्ये मे प्रक्ष्यसि तत्र ते कालो भविष्यति प्रश्नस्य व्याकरणायेति । यावदपरेण समयेन भिक्षुसंघे संनिषण्णे सन्निपतिते संघस्थविरस्तं समानोपाध्यायं पृच्छति । आयुष्मन् ] किं त्वं तस्यां वेलायां कथयसीति । स कथयति । त्वं मयोक्तः किं त्वमुपाध्यायः कालगत इति तुष्टोऽहं संघस्थविरो जात इति । स एतत् प्रकरणं विस्तरेण संघमध्ये तस्य निवेदयामास । स आत्तमनात्तमना भिक्षवश्च उदानमुदानयन्ति । अहो बुद्धः अहो धर्मः अहो संघः अहो धर्मस्य स्वाख्यातता । यत्रेदानीमेवंविधा अपि पापकारिणो विनिपातगता एवंविधं गुणगणमधिगच्छन्तीति ।

यथा मातृघातक एवं पितृघातको विस्तरेण वक्तव्यः[1] ।

उद्दानम्[2] ।

अर्हद्वधः संघ[भेदो] दुष्टचित्तेन शोणितम् ।
आन्तमापन्नकेन चत्वार उत्क्षेपकेन च ॥

बुद्धो भगवान् श्रावस्यां विहरति जेतवनेऽनाथपिण्डदस्या[रा]-म । यदा भगवता राजा बिम्बिसारः सत्येषु प्रतिष्ठापितः सार्धमशीत्या देवतासहस्रैरनेकैश्च मागधकैर्ब्राह्मणगृहपतिशतसहस्रैः तेन स्वे विजिते घण्टावघोषणं कारितम् । न मम विजिते

1 The previous story (above pp. 54-61) is literally repeated in Tib. 124a, l. 2-127b. l. 2. Only the word "mother" is substituted by "father".

2 See Tib. 127b. l. 2.

चौर्यं कर्तव्यम्। यः करोति तमहं निर्विषयं करोमि। स्वस्माच्च कोशकोष्ठागारान्मोषकं ददामीति। यदा च भगवता राजा प्रसेनजिद् दहरोपमेन[1] सूत्रेण विनीतस्तदा तेनापि स्वे विजिते घण्टावघोषणं कारितम्। न मम विजिते चौर्यं कर्तव्यम्। यः करोति तस्य वधो दण्डः। स्वस्माच्च कोशकोष्ठागारान्मोषकं ददामीति। ततो ये मगधविषये चोरा ये च कोसलविषये ते सीमान्तरिकान् गत्वावस्थिताः। यो मगधविषयात् सार्थवाह आगच्छति तमपि मुष्णन्ति योऽपि कोसलविषयात्। यावदपरेण समयेन मगधविषयात् सानुयात्रः[2] सार्थः कोसलविषयं संप्रस्थितो यदा सीमान्तरिकान् प्राप्तस्तदा स सार्थवाहः कथयति। भवन्तोऽसौ राजा प्रसेनजित् कोसलो व्याडो[3] विक्रान्तः शक्तोऽस्माकं मोषं[4] दापयितुं किमर्थं वयमायात्रिकाणां भृतिमनुप्रयच्छामः। प्रतिनिवर्तन्तु अत एवैत इति। ते तैः प्रतिनिवर्तिताः। अवगणकोऽसौ सार्थः संप्रस्थितः। ते च चोरा भलिन्[5] दत्त्वावस्थिताः। तेन समाख्यातम्। भवन्तोऽवगणकः सार्थ आगच्छति। किमुदासीनास्तिष्ठतेति। ततस्ते तस्कराः प्रधाविताः। तत्र केचिद् वणिजो जीविताद् व्यवरोपिताः केचित् पण्यं छोरयित्वा

1 Tib. 127b, l. 5 ; གཞོན་ནུ་འི་དཔེ་འི་མདོ་སྡེས ।

2 Tib. 127 : བསེལ་བ་དང་བཅས་པ = सानुचरः

3 Tib. 128a, l. 1 ; གདུག་པ་ཕ་རོལ ।

4 Ibid སྐྱིན་པ = goods

5 Ibid. l, 2 : བྲུ་མ་ཏ = messenger

निष्पलायिताः। असमन्वाहृत्यार्हतां ज्ञानदर्शनं न प्रवर्तते[1]। अर्हन्तोऽपि तेन सार्थेन गच्छन्तो जीविताद् व्यवरोपिताः। तत्र ये वणिजो निष्पलायितास्ते पांशुना शिरो गात्रं च धूलयित्वोद्धस्तमस्तका विक्रोशन्तो राज्ञः प्रसेनजितः कोसलस्य सकाशं गताः कृतकरपुटा विज्ञापयन्ति। देव तव विजिते वयमवणिजो व्यवस्थापिताः। किं कृतम्। चोरैर्मुषिताः स्म। कतरस्मिन् प्रदेशे। अमुष्मिन्। राज्ञा विरूढकस्य सेनापतेराज्ञा दत्ता। शीघ्रं मोषकं तस्करांश्चानयेति। स चतुरङ्गं बलकायं सन्नाह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं सन्नह्य निर्गतः। तेऽपि चोरा विस्रब्धविहारिणो मुक्तसन्नाहाः अन्यतमस्यां शालाटव्यां मोषकं भाजयमानास्तिष्ठन्ति। ते विरूढकेन चतुर्दिशं वेष्टयित्वा मध्ये शङ्खपटहशब्दैर्वित्रासिताः। तेषां केचिन्मोषकं छोरयित्वा निष्पलायिताः केचित् प्रघातिताः। षष्टिस्तु जीवग्राहं गृहीताः। स तान् मोषकं चादाय राज्ञः सकाशं गतः। देव अमी चोरा अयं च मोषक इति। ततस्ते राज्ञाभिहिताः। भवन्तो न युष्माभिः श्रुतं राज्ञावघोषणं कारितम्। न मे विजिते केनचित् चौर्यं कर्तव्यम्। यः करोति तस्य वधो दण्डः स्वस्माच्च कोशकोष्ठागारान्मोषकं ददामीति। ते कथयन्ति। श्रुतम्। अथ कस्माद् वणिजो मुषिताः। देव न जीवामः। कस्माद् जीविताद् व्यवरोपिता। भयमुपदर्शयद्भिः। कीदृशं युष्माभिर्भयमुपदर्शितम्। इदानीं वस्तादृशं भयमुपदर्शयामि यन्न केनचिद् दर्शितपूर्वम्। ततो राज्ञामात्यानामाज्ञा दत्ता। गच्छन्तु भवन्तः

1 Cf. *Divyā.*, p 190.

सर्वान् एतान् प्रघातयत। ते रथ्यावीथिचत्वरशृङ्गाटकेष्वनुश्राव्यमाणा आघातनं नीयन्ते। अन्यतमश्च चोरो रथ्यासंबाधे निष्पलायितो जेतवनं भिक्षोः सकाशमुपसंक्रम्य कथयति। आर्य प्रव्रजितुमिच्छामि। स तेन प्रव्रजित उपसंपादितः। तेऽपि चोराः प्रघातिताः। उक्तं भगवता आत्मविपत्तिं भिक्षवोऽभीक्ष्णं प्रत्यवेक्षध्वम्। तत् कस्य हेतोः। आत्मविपत्तिर्भिक्षवः संवेजनीयं स्थानं परविपत्तिः आत्मसम्पत्तिः परसम्पत्तिः संवेजनीयं स्थानमिति। यावदपरेण समयेन भिक्षवः श्मशानचारिकां चरन्ति। सोऽपि तैः सार्धं श्मशानचारिकां चरति। तेन ते चोरा दृष्टाः प्रघातिताः। साश्रुकण्ठो व्यवस्थितः। भिक्षवः कथयन्ति। आयुष्मन्तः ईदृशोऽप्ययं भद्राशयो नवप्रव्रजित इति। स मुक्तकेनैव कण्ठेन रोदितुमारब्धः। भिक्षुभिरुच्यते। आयुष्मन् कस्यार्थे त्वमेवमोराटिकां करोषीति। स कथयति। अयं मे पिता अयं [मे] भ्राता अयं मे पितृव्यः अयं मे मातुल इति। ते कथयन्ति। एभिरर्हन्तो जीविताद् व्यवरोपिता मा त्वयापि व्यवरोपिताः। स कथयति। व्यवरोपिताः। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। अर्हद्घातकोऽयं भिक्षवः पुद्गलः। नाशयत यूयमर्हद्घातकं पुद्गलम्। अप्ररोहणधर्मा अर्हद्घातकः पुद्गलोऽस्मिन् धर्मविनये। तस्मात् तर्हि भिक्षवो यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति तेन प्रष्टव्यो मास्यर्हद्घातक इति। अपृष्ट्वा प्रव्राजयति उपसंपादयति सातिसारो भवति।

आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति। येन भदन्त पूर्विकायां प्रव्रज्यायां तथागतस्य श्रावकसंघो भिन्नः सचेत् स

आकाङ्क्षेत् स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। प्रव्राजयितव्यो न प्रव्राजयितव्यः। न प्रव्राजयितव्य उपालिन्। तस्मात्तर्हि यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति स तेन प्रष्टव्यो मासि संघभेदक इति। अपृष्ट्वा प्रव्राजयति सातिसारो भवति।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। येन भदन्त तथागतस्यान्तिके दुष्टचित्तरुधिरमुत्पादितं स आकाङ्क्षेत् स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। प्रव्राजयितव्यो न प्रव्राजयितव्यः। न प्रव्राजयितव्य उपालिन्। तस्मात् तर्हि यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति स तेन प्रष्टव्यो मासि तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादक इति। अपृष्ट्वा प्रव्राजयति सातिसारो भवति[1]।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। यो भदन्त पूर्विकायां प्रव्रज्यायां चतुर्णां पाराजिकानामापत्तिमापन्नः सचेत् स आकाङ्क्षेत् स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। प्रव्राजयितव्यो न प्रव्राजयितव्यः। न प्रव्राजयितव्य उपालिन्। तस्मात् तर्हि यस्य कस्यचित् प्रव्रज्यापेक्ष उपसंक्रामति स तेन प्रष्टव्यो मासि चतुर्णां पाराजिकानामन्यतमान्यतमामापत्तिमापन्न इति। अपृष्ट्वा प्रव्राजयति उपसंपादयति वा सातिसारो भवति[2]।

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे। तत्र भगवान् भिक्षूनामन्त्रयते स्म। सचेद् भिक्षवोऽदर्शनायोत्क्षिप्तकः पुद्गलो विभ्रान्तकः पुनरागत्य ब्रूयात् प्रव्राजयन्तु

1 Cf. Mahāvagga, I. 67 2 Cf. Ibid., I. 78

मामायुष्मन्तो द्रक्ष्याम्यापत्तिमिति । प्रव्राजयितव्यः । प्रव्राजयित्वा ब्रूयादुपसंपादयन्तु मामायुष्मन्तो देशयिष्याम्यापत्तिमिति । उपसंपादयितव्यः[1] । यद्युपसंपन्नो ब्रूयात् न पश्याम्यापत्तिमिति । सचेत् संघसामग्रीमारागयति[2] पुनरप्यदर्शनायोत्क्षेप्तव्यः । नोचेदारागयिष्यत् सचेत् उपसंपन्नः सूपसंपन्नः । दुर्लभो हि पुद्गलस्य स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदः भिक्षुभावः । अथादर्शनायोत्क्षिप्तकः एवमप्रतिधर्मस्थायोत्क्षिप्तकः[3] ।

उद्दानम्

हस्तच्छिन्नाः पादच्छिन्ना अङ्गुलीफणहस्तकाः ।
अनोष्ठकाश्च चित्राङ्गा अतिवृद्धातिबालकाः ।
एवंविधा हि पुरुषाः प्रतिक्षिप्ता महर्षिणा ॥
ये चान्ये बहवः प्रोक्ताः खञ्जस्त्रीवामनादयः ।
तेऽपि न प्रव्राजयितव्या इति समादिष्टं महर्षिणा ॥
प्रासादिकस्य प्रव्रज्या परिशुद्धस्योपसंपदा ।
आख्याता सत्यनाम्ना वै सम्बुद्धेन प्रजानता ॥

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे । आचरितं षड्वर्गिकाणां यं प्रव्राजयन्ति उपसंपादयन्ति वा स तैः सार्धं तावत् संवसति यावत् न जानीते दुष्ठुलसमुदाचारा एत इति । यदा तु संजानीते तदा प्रकृतिस्थभिक्षुभिः[4] सार्धं प्रतिवसति नान्यत्र । शास्तुराज्ञया कालं

1 Cf. Mahāvagga, I, 79.

2 Tib. 129b, l. 6-7: གལ་ཏེ་དགེ་འདུན་ཚོགས་པ་ཡོད་ན །

3 Ibid. ཇི་ལྟ་བ་བཞིན་དུ་ཕྱིར་མི་འཆོས་བས་གནས་ནས་ཕྱུང་བ །

4 Tib. 130a, l. 4: དགེ་སློང་རང་བཞིན་དུ་གནས་པ་དག་དང །

दर्शनायोपसंक्रामति। ततस्ते संजल्पं कुर्वन्ति। नन्दोपनन्द एते कालपालिका जातापहारिणो[1] यादृशा वयं प्रव्राजयामः। एतेऽपहरन्ति। इदानीं तादृशं प्रव्राजयामो यो न कालपालिकैरपह्रियत इति।

यावदपरेण समयेन उपनन्देन परिभ्रमता हस्तच्छिन्नकः पुरुषो दृष्टः। भद्रमुख किमर्थं न प्रव्रजसीति। स कथयति। आर्य कोऽयं हस्तविकलं प्रव्राजयतीति। उपनन्दः कथयति। भद्रमुख करुणाप्रभावितं भगवतः शासनम्। अहं ते प्रव्राजयामीति। स तेन प्रव्राजित उपसंपादितः। ततो द्वौ त्रीन् वा दिवसान् आसमुदाचारिकान् धर्मान् शिक्षयित्वाभिहितः। भद्रमुख न मृगो मृगं पुष्णाति। विस्तीर्णा श्रावस्ती। स्वो गोचरः पित्र्यो विषयः। पिण्डपातमटित्वा जीविकां कल्पयस्वेति। स कथयति। उपाध्याय कथं पिण्डपातमटामीति। स कथयति। एतावत्त्वं न परिज्ञायते। अहं ते कथयामीति। तेन तस्य रज्ज्वा निवासनं बद्धं कण्टकैश्चीवरं प्रावृतम्। वामे बाहौ पात्रयोणिका[2] न्यस्ता दक्षिणे बाहौ खंखरको बद्धः। ततोऽसौ श्रावस्तीं गोचराय प्रसृतः। मातृग्राम उरसि प्रहारं दत्त्वा कथयति। आर्य किं ते प्रव्रजितस्य हस्तौ च्छिन्नाविति। स कथयति। आगारिकस्य मे च्छिन्नौ न प्रव्रजितस्य। केन प्रव्राजितः। स कथयति। उपाध्यायो-उपनन्देन। ताः कथयन्ति। तं दुष्ठुलसमुदाचारं मुक्त्वा कोऽन्यः

1 Tib. 130a, l. 5 : ལྷུང་བ་ཟེད་ནག་པོ་ཅན་འདི་དག་ནི་བཅས་འགྲོག་པ་དང་འདྲ་སྟེ།

2 Tib. 130b, l. 3 : ལྷུང་བཟེད་ཀྱི་སྣོད་བཞག།

एवंविधं प्रव्राजयिष्यति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवो हस्तच्छिन्नकं प्रव्राजयन्ति। भगवानाह। न भिक्षुणा हस्तच्छिन्नकः प्रव्राजयितव्यः उपसंपादयितव्यो वा। भिक्षुः हस्तच्छिन्नकं प्रव्राजयति उपसंपादयति सातिसारो भवति। यथा हस्तच्छिन्नका एवं पादच्छिन्नकाः अङ्गुली[च्छिन्नकाः] फणहस्तकाः अनोष्ठा लक्षणाहताः कशाहताश्चिताङ्गा अतिवृद्धाश्च न प्रव्राजयितव्याः। अतिबालान् प्रव्राजयन्ति ते सांघिकं शयनासनमुच्चारप्रस्रावेण नाशयन्ति। भगवानाह। तेऽपि न प्रव्राजयितव्याः। खंजं प्रव्राजयन्ति। भगवानाह। न प्रव्राजयितव्यः[1]। [2]काण्डरिककाणकुणिकुब्जवामनगलगण्डजातमूकान्धबधिरपीठसर्पिश्लीपदान् प्रव्राजयन्ति। भगवानाह। एवंविधा अपि न प्रव्राजयितव्याः। प्रव्राजयन्ति सातिसारा भवन्ति। भिक्षवः स्त्रीच्छिन्नान्[3] भारच्छिन्नान् मार्गच्छिन्नान् कन्दलीच्छिन्नकतालमुक्तकान् प्रव्राजयन्ति[4]। भगवानाह। एवंविधा अपि न प्रव्राजयितव्याः। प्राव्रजयन्ति सातिसारा भवन्ति। [5]भिक्षवः कुष्ठगण्डकिटिभकिलासदद्रूकण्डूरजतविचर्चिकाक्षयकासश्वासशोषापस्माराटक्करपाण्डुरोगगुल्मभगन्दराभिभूतान्[6] प्रव्राजयन्ति। भगवानाह। एवंविधा अपि न प्रव्राजयितव्याः। प्रव्राजयन्ति सातिसारा भवन्ति।

॥ प्रव्रज्यावस्तु समाप्तम् ॥

1 Cf. Mahāvagga. I. 71.

2 Tib. 131a, l. 1: སྣད་འཆལ།

3 Tib. 131a. l. 2: ཐུད་མེད་ཀྱིས་དུབ་པ། Mvyut. 270. 38.

4 See Mvyut. 270.

5 Tib. 131a, l, 3 omits these three lines.

6 Mvyut. 283.

पिण्डोद्दानम् ।

तीर्थिका कप्पिण आवासो भिक्षुपेयालपश्चिमम् ।

उद्दानम् ।

तीर्थिकाः पोषधमाहुः न पोषधः क्रियते ।

विसंकेते न निषीदन्ति कुत्र पोषधमुद्दिशेत् ॥

भगवान् राजगृहे विहरति वेलुवने कलन्दकनिवापे । तेन खलु समयेन राजगृहीयका उपासकाः दिवादिवम् एवोद्युक्ता अभूवन् भगवन्तं दर्शनायोपसंक्रमितुं पर्युपासनायै । अथ राजगृहीयकानामुपासकानामेतद् अभवत् । अतिप्रातस्तावदस्माकं भगवन्तं दर्शनायोपसंक्रमितुं पर्युपासनायै । प्रतिसंलीनो भगवान् प्रतिसंलीनाश्च मनोभावनीयाश्च भिक्षवो यन्नु वयं येनान्यतीर्थिकपरिव्राजकानामारामस्तेनोपसंक्रमेम । अथ संबहुला राजगृहीयका उपासका येनान्यतीर्थिकपरिव्राजकानामारामस्तेनोपसंक्रान्ताः । उपसंक्रम्यान्यतीर्थिकपरिव्राजकैः सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्यैकान्ते निषण्णाः । अथान्यतमस्तीर्थ्यस्तीर्थ्यानिदमवोचत् । किन्नु भवतामेव निषद्या क्रिया पोषधश्च प्रज्ञायते आहोस्वित् श्रमणानामपि शाक्यपुत्रीयाणाम् । अथान्यतमस्तीर्थ्यस्तीर्थ्यान् इदमवोचत् । अस्माकमेव भवन्तो निषद्या क्रिया पोषधश्च प्रज्ञायते न त्वेव श्रमणानां शाक्यपुत्रीयाणाम् । अथ संबहुला राजगृहीयका उपासकाः संबहुलानामन्यतीर्थिकपरिव्राजकानां भाषितं नाभिनन्दन्ति न प्रतिक्रोशन्ति । अनभिनन्द्याप्रतिक्रोश्य उत्थाया-

सनेभ्यः प्रक्रान्ताः। ते येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। एकान्तनिषण्णा राजगृहीयका उपासका यावानेवैषामभ्यु[पगम्य] संबहुलै-रन्यतीर्थिकपरिव्राजकैः सार्धमन्तराकथासमुदाहारस्तत् सर्वं भगवतो विस्तरेणारोचयन्ति। एवं चाहुः। अहो वत भगवान-स्माकम् अपि निषद्यां क्रियां पोषधं च प्रज्ञापयेद् अनुकम्पामु-पादाय। अधिवासयति भगवान् संबहुलानां [राज-गृहीयकानां][1] तूष्णींभावेन। अथ संबहुला राजगृहीयका उपासका भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतोऽन्तिकात् प्रक्रान्ताः। तत्र भगवान् भिक्षून् आमन्त्रयते स्म। तस्माद् अनुजानामि भिक्षुभि-रद्याग्रेण निषद्या क्रिया पोषधश्च प्रतिजागर्तव्यः। उक्तं च भगवता। अद्याग्रेण भिक्षुभिर्निषद्या क्रिया पोषधश्च प्रतिजागर्तव्य इति। ते न जानन्ति का निषद्या का क्रिया कः पोषध इति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति।

भगवानाह। निषद्या उच्यते योगः। एतद् यूयं भिक्षव इमम् एव कायम् ऊर्ध्वं पादतलाद् अधः केशमस्तकात् त्वक्पर्यन्तं यथा स्थितं यथा प्रणिहितं पूर्णं नानाप्रकारस्याशुचेः प्रत्यवेक्षध्वम्। सन्ति अस्मिन् काये केशा रोमाणि नखा दन्ता रजो मलं त्वङ्-मांसम् अस्थि स्नायु सिरा वृक्का हृदयं प्लीहा क्लोमक अन्त्राण्यन्त्र-गुणान्यामाशयः पक्वाशय औदर्यकं यकृत् पुरीषम् अश्रु स्वेदः

1 Ms. संबहुलानामन्यतीर्थिकपरिव्राजकानां।

खेटः शिङ्घाणको वसा लसिका मज्जा मेदः पित्तं श्लेष्मा पूयः शोणितं [मूत्रमिति भावयितव्यं प्रत्यवेक्षितव्यम्] इति।

उक्तं भगवता योगो भावयितव्य इति। भिक्षवो गोचराय प्रसृता अपि योगं भावयन्ति। ते भ्रान्तेन हस्तिना सार्धं समागत्य [अश्वेन पदातिकेन सार्धं च समागत्य निपतन्ति। अश्राद्धा आर्यानदृष्ट्वा कथयन्ति किमेते कुर्वन्तीति। ते योगिनः] कथयन्ति। योगं भावयामः। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न गोचराय प्रसृतेन योगो भावयितव्यः। [ते द्वारकोष्ठके योगं भावयन्ति। अश्राद्धाः कथयन्ति। किमेते सुखशय्यायां कुर्वन्ति। एतत् प्रकरणं भिक्षवो भगवत] आरोचयन्ति। भगवानाह। न द्वारकोष्ठके योगो भावयितव्यः। ते प्रासादे भावयन्ति। स एव आदीनवो भवति। भगवानाह। न भिक्षुणा [प्रासादे योगो भावयितव्यः। ते लयने भावयन्ति। शब्देन योगिनश्चित्तस्य एकाग्रतां न लभन्ते। एतत् प्रकरणं भिक्षवो] भगवत आरोचयन्ति। भगवानाह। न लयने योगो भावयितव्यः। ते अरण्ये भावयन्ति। चौरधूर्तसिंहव्याघ्रद्वीपिनां गम्या भवन्ति। एतत् [प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न अरण्ये योगो भावयितव्यः। ते ग्रामोपकण्ठे समा]गत्य भावयन्ति। अश्राद्धा अवस्कन्दयन्ति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। स प्रदेशः शाखाभिर्वाटिकैर्वा वेष्टयितव्यः। [ते तं प्रदेशं शाखाभिर्वाटिकैर्वा वेष्टयन्ति। अश्राद्धा अवस्कन्दयन्ति]। एतत् प्रकरणं भिक्षवो

भगवत आरोचयन्ति। भगवानाह। [कन्थाभिर्वा परिखाभिर्वा वेष्टयितव्यः।] स प्रदेशः कन्थाभिर्वा परिखाभिर्वा वेष्टितो भवति। अश्राद्धा अव[स्कन्दयन्ति। एतत् प्रकरणं भिक्षवो] भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि प्रहाणशाला मापयितव्या।

[ते न जानन्ति किंप्रमाणा प्रहाणशाला मापयितव्येति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। द्वे प्रहाणशाले]। खुद्दलिका महन्तिका च। खुद्दलिका द्विलयनिका मध्ये सुरुङ्गा। महन्तिका दशलयनिका द्वादशलयनिका वा [मध्ये सुरुङ्गा]। भिक्षवो लयनं कृत्वा [शोधनमुखं न कुर्वन्ति। भगवानाह। शोधनमुखं कर्त्तव्यम्। भिक्षवः कवाटार्गलं न [ निवेशयन्ति। भगवानाह। कवाटार्गलं निवेशयितव्यम्। दुःखं बध्यते]। भगवानाह। आयामपटको दातव्यः। शब्दं करोति। भगवानाह। अधस्तात् चर्मखण्डको दातव्यः। दुःखं बध्यते। भगवानाह। [सूचकमिन्द्रकीलं कवाटार्गलं च कर्तव्यम्। तमिस्रा भवति। भगवानाह। वाताय]नो मोक्तव्यः। अधस्तात् मुञ्चति। चौरधूर्तसिंहव्याघ्राणां गम्या भवन्ति। भगवानाह। नाधस्तान्मोक्तव्यः। उपरिष्टान्मुञ्चति। स एवा[दीनवो भवति। ते उपरिष्टाद् द्वौ भागौ छोरयित्वा अधस्तान्मुञ्चति। भगवानाह। अधस्ताद् द्वौ भागौ छोर]यित्वा उपरिष्टात् तृतीयो भागो मोक्तव्यः। भिक्षवो बहिर्विस्तीर्णां [वृक्षवाटिकां कुर्वन्ति। वायस-चातक-पारावताः प्रविशन्ति]। भगवानाह। जालवातायनं कर्तव्यम्। लम्बुकलैलाटाः

प्रविशन्ति। भगवानाह। कवाटिका दातव्या। वातेनोद्घाट्यते। [भगवानाह। अर्गलं निवेशयितव्यम्। दुःखं बध्यते। भगवानाह। सूचकम् इन्द्रकीलं निवेशयितव्यम्। तथापि दुःखं बध्यते। भगवानाह। शुष्ककाष्ठेन अर्गलं कवाटम् इन्द्रकीलं च कर्तव्यम्। तथापि दुःखं बध्यते।] अजपादकदण्डकैरुद्घाटयितव्यम्।

तत्रासनेन कार्यम्। भगवानाह। मृन्मयान्यासनानि कर्तव्यानि। खक्खटा[1] भवन्ति। भगवानाह। [मञ्चः कर्तव्यः। ते न जानते कीदृशो मञ्चः। भगवानाह। एकहस्तप्रमाणश्चक्राकारः। तत्र तन्तुकन्थ]का कर्तव्या। ततः पश्चादानन्दा[2] दातव्या। ते न जानते कति वाणा[3] इति। भगवानाह। पञ्च वाणाः। मुञ्जशाणवल्वजकौशेय[वंशजाः। तथापि खक्खटा[1] भवन्ति। तूलिका संस्तरितव्या। ते न जानते] कीदृशी तूलिकेति। भगवानाह। दीर्घं चत्वारो हस्ताः तिर्यग् द्वे। द्विपुटां कृत्वा सेवयितव्या। ततः पश्चात्तूलिकेन पूरयितव्या। [ते न जानते कति तूलिकवृक्षा इति। भगवानाह। पञ्च तूलिकवृक्षाः। अर्ककशिकैर्कवंशशाल्मलयः]। अपराण्यपि पञ्चरूपाणि। ऊर्णा शणः कार्पासः कौशेयकानि पर्णकानि। पूरिता भवन्ति [इति]। सर्वं तत् तूलमेकं प्रदेशं गच्छति। भगवानाह। [सूत्रेण सेवयितव्यम्। समतलं कर्त्तव्यम्। ते न जानते कथं सेवयितव्यमिति।

1 खंलटा ; Tib. 133b, I. 5: མཁྲང་བར =hard

2 आनन्द=आनन्दपट्टिका 3 वाण=woven textiles

[भगवानाह]। सूत्रकैर्बद्ध्वा कर्णे परिबध्य धारयितव्या। तथापि प्रचालयति। भगवानाह। यष्टिर्धारयितव्या। भिक्षवस्तां कलमच्छेद्यां कुर्वन्ति। व्रणं करोति। भगवानाह। [द्रोणप्रमाणं छित्त्वा कर्तव्यम्। तथापि व्रणं करोति। भगवानाह। कौशेयवस्त्रेण वेष्टयितव्या। ततो धार]यितव्या। तथापि प्रचालयति। भगवानाह। कुन्दसकः[1] क्षेप्तव्यः। भिक्षवोऽन्धकारे क्षिपन्ति। स प्रचालयति[2]। भगवानाह। सूत्रकैर्बद्ध्वा क्षेप्तव्यः। [ततो बहिः समं कर्तव्यम्।] तथापि प्रचालयति। [भगवानाह। सम्मुखे प्रदीपः स्थापयितव्यः। तथापि प्रचालयति। भगवानाह। एकः पादोऽव]तारयितव्यः। तथापि प्रचालयति। भगवानाह। द्वितीयः पादोऽवतारयितव्यः। तथापि प्रचालयति। भगवानाह। उत्थाय चंक्रमि[तव्यम्]। भिक्षवश्चंक्रममाणाः संशयमापन्नाः। भगवानाह। अर्गलं धारयितव्यम्। [हस्तेन धारयन्ति। भगवानाह। अव]क्रमितव्यम्। सोपानत्काश्चंक्रमन्ते। शब्दं कुर्वन्ति। भगवानाह। न सोपानत्केन चंक्रमितव्यम्। पांसुना पादौ नाश्येते। भगवानाह। कम्बलं दातव्यम्।

भगवानाह। प्रहाणिकानां [भिक्षूणामासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। प्रहा]णिकेन भिक्षुणा तृतीये तृतीये दिवसे पादौ प्रक्षालयितव्यौ। प्रहाणिको भिक्षुर्यथाप्रज्ञप्तानासमुदाचारिकान् धर्मान् न समादाय वर्तते सातिसारो भवति।

1 Tib. 135a, l. 6: ཟོ་ལིང=a kind of jasmine

2 MS. स न पश्यति, Tib. 134a, l. 6: འོན་ཀྱང་ཡུར་ནས །

ते तत्र न यापयन्ति[1]। भगवानाह। उपरिष्टाद् द्वितीयः पूरः कर्तव्यैः। न आरोहति। भगवानाह। सोपानं कर्तव्यम्। प्रपतितं[2] भवति। भगवानाह। वेदिका परिक्षेप्तव्या। तत् कंपते। भगवानाह। लोहकण्टकेन क्षेपयितव्या।

तथापि न यापयन्ति। भगवानाह। बहिर्वलयेन च पंक्तिः कर्तव्या। तेऽपि बद्धानि द्वाराणि कुर्वन्ति। ते परस्परमवभासयन्ति। भगवानाह। द्वार[संयोगः कर्तव्यः]। द्वारकोष्ठकानि वा गह्वराणि कर्तव्यानि। ते तत्र प्रचालयन्ति। भगवानाह। द्वारस्थूलपटिकां वा पटकं वा लम्बयित्वा शयितव्यम्। नात्र कौकृत्यं करणीयम्। ते ततो गता भवन्ति। न पुनरागच्छन्ति।

भगवानाह। प्रहाणप्रतिजाग्रको भिक्षुः [संमन्तव्यः। पञ्चभिर्धर्मैः समन्वागतः प्रहाणप्रति]जाग्रको भिक्षुरसंमतो न संमन्तव्यः। संमतश्चावकासयितव्यः। कतमैः पंचभिः। न च्छन्दाद्गच्छति न द्वेषान्न मोहान्न भयाद्गच्छति। जागृतां जागृतां प्रहाणं न जानाति। एभिः पंचभिर्धर्मैः समन्वागतः प्रहाणप्र[तिजाग्रको भिक्षुः] संमतश्चावकासयितव्यः। पंचभिर्धर्मैः समन्वागतः प्रहाणप्रतिजाग्रको भिक्षुरसंमतः संमन्तव्यः। संमतश्च नावकासयितव्यः। कतमैः पंचभिः। न च्छन्दाद्गच्छति

1 Tib. 134b, l. 4: མི་ཤོང་ནས།=There being no room for them.

2 Ms. प्रपातं ; Ibid., l 5: ལྷུང་བར་གྱུར་ནས།

1 Tib. 136a, l. 2: ཞི་བ། 2 Ms. ०द्रोधुमा तिषु

न द्वेषान्न मोहान्न भयाद् गच्छति। प्रतिजाग्रका[णां कृतमकृतं जानाति। पंचभिर्धर्मैः समन्वागतः प्रहाणप्रतिजाग्रको भिक्षुः संमतश्च नावकासयितव्यः। एवं च पुनः संमन्तव्यः।

शयानासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षुं समनुयुज्य सर्वसंघे सन्निषण्णे [एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।] उत्सहसे त्वमेवंनामा संघस्य प्रहाणं प्रतिजागर्तुम्। तेन वक्तव्यम्। उत्सहे। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अयमेवंनामा प्रहाणप्रतिजाग्रको भिक्षुः उत्सहते संघस्य प्रहा[णं प्रतिजागर्तुं] यत् संघ एवंनामानं प्रहाणप्रतिजाग्रकं संमन्यते। एवंनामा प्रहाणप्रतिजाग्रको भिक्षुः संघस्य प्रहाणं प्रतिजागरिष्यतीत्येषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। [अयमेवंनामा प्रहाणप्रतिजाग्रको भिक्षुरुत्सहते] प्रहाणं प्रतिजागर्तुम्। तत्संघ एवंनामानं प्रति जागर्तुम् एवंनामानं प्रहाणप्रतिजाग्रकं भिक्षुं संमन्येत। अयमेवंनामा प्रहाणप्रतिजाग्रको भिक्षुः संघस्य प्रहाणं प्रतिजागरिष्यति यदायुष्मतां क्षमते एवंनामानं प्रहाणप्रति[जाग्रको] भिक्षुः संघस्य प्रहाणं प्रतिजागरिष्यति स तूष्णीम्। न क्षमते भाषताम्। संमतः संघेन एवंनामा प्रहाणप्रतिजाग्रको भिक्षुः। अयमेवंनामा प्रहाणप्रतिजाग्रको भिक्षुः संघस्य प्रहाणं प्रतिजागरिष्यति।

[भिक्षवः] प्रहाणप्रतिजाग्रकस्याहं भिक्षोरासमुदाचारिकान्

धर्मान् प्रज्ञपयिष्यामि। प्रहाणप्रतिजाग्रकेण भिक्षुणा प्रहाणशाला सेक्तव्या संमार्जयितव्या सुकुमारी गोमयकार्षी अनुप्रदातव्या। वर्चकुटी प्रस्रावकुटी च [सेक्तव्या संमार्जयितव्या सुकुमारी गोमय-] कार्षी अनुप्रदातव्या। पलवैतुङ्गका स्थापयितव्या। मृत्तिका-पानीयं स्थापयितव्यम्।

स तेषामेकैकं गत्वा शब्दापयति। भगवानाह। नैककः शब्दापयितव्यः। गण्डी आकोटयितव्या। तेन विस्तरेण गण्डी दत्ता [यावत् तन्नागरिकः समा]गतः। आर्याः किं चौरः पतितः। ते कथयन्ति। भवन्तो न चौरः पतितः। अपि तु प्रहाणं प्रतिजाग्रति। ते कथयन्ति। आर्या विहेठं प्रतिजागृथ कुतोऽत्र प्रहाणम्। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। [भग-वानाह। गण्डी विस्तरेण न दातव्या।

तत्र पंच] गण्डी। सार्वसंघिका कर्मगण्डी अन्तगण्डी प्रहाणगण्डी आपद्गण्डी च। तत्र सार्वसंघिकामभिद्रोग्धुं त्रिस्त्रिः[1] प्रहारं कर्मगण्डी[म]भिद्रोग्धुं [सकृत]त्रिः[2] प्रहारम् [3]अन्तगण्डीं मूषिकां प्रहाणगण्डीं ख[रता]लाम् [आपद्गण्डीं यथासुखं कुर्वन्ति।

ततो यवागूं] यथासुखं कुर्वन्ति। भगवानाह। [यवागूर्यथा-

1 Ms. त्रिषु 2 Ms. द्वे

3 Tib. 136a. l. 2: ཞི་བའི་གཎྜཱི་དེ་ནི་བྱི་བོང་།
སྤོང་བའི་གཎྜཱི་དེ་ནི་ཁར་སིལ་ལོ།

सुखं न कर्तव्या। ] कालं ज्ञात्वा यथासुखं कर्तव्या। ये संघलाभिनस्ते गत्वा संघे अवतरिष्यन्ति। ये पिण्डपातिकास्ते हस्तपादौ प्रक्षाल्य ग्रामं पिण्डाय प्रवेक्ष्यन्ति। त एवमेव यथासुखं कुर्वन्ति। [भगवानाह। तैर्यथासुखं न कर्तव्यम् ]।

त्रिदण्डकं[1] भाषयितव्यः। अतिमहान्तं भाषन्ते। भगवानाह। नातिमहान्तं भाषयितव्यः। ते त्वल्पं भाषन्ते। भगवानाह। नात्यल्पं भाषयितव्यम्। अपि तु परिमण्डलैर्भाषयितव्यम्।

दक्षिणां नादिशन्ति। भगवानाह। [दक्षि]णादेष्टव्येति। ते न जानते केनादेष्टव्येति। भगवानाह। संघस्थविरेण भिक्षुणा आदेष्टव्येति। ते महतीं दक्षिणामादिशन्ति। भगवानाह। न महती दक्षिणा आदेष्टव्या। अत्यल्पमादिशन्ति। भगवानाह। [2]त्रिपरिमण्डलदक्षिणा आदेष्टव्येति।

प्रहाणप्रतिजाग्रको भिक्षुः सर्वपृष्ठत आगच्छति सर्वाग्रतो गच्छति। भगवानाह। प्रहाणप्रतिजाग्रकेण भिक्षुणा सर्वपृष्ठतो गन्तव्यं सर्वाग्रत आगन्तव्यं सचे[न्न भवति तदा]पावरणीं गोपयित्वा वक्तव्यम्। आयुष्मानमुष्मिन् प्रदेशे मया अपावरणी गोपिता उद्घाट्य प्रवेक्ष्यसे। प्रहाणप्रतिजाग्रको भिक्षुर्यथा प्रज्ञप्तानासमुदाचारिकान् धर्मान् असमादाय वर्तते सातिसारो भवति। इयमेव [ज्ञ]प्तिद्वितीयं ज्ञप्तिचतुर्थं कर्म। इयमुच्यते क्रिया।

पोषधः कतमः। यो वो मया भिक्षवः प्रातिमोक्षसूत्रोद्देशः

1 Tib. 136a, l. 5: རྒྱུད་ཚགས་གསུམ=three times.

2 Tib. 136b, l. 1: རན་པར་བྱའི །=परिमित।

उद्देष्टव्यः। अद्याग्र[मर्धा]न्तरमासमुद्देष्टव्यः[1]। उक्तं भगवता अन्तरमासं प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। भगवानाह। संघस्थविरेणार्धा[न्तर]मासं प्रातिमोक्षसूत्रोद्देश उद्देष्टव्य इति। उक्तं भगवता संघस्थविरेणार्धा[न्तर]मासं प्रातिमोक्षसूत्रोद्देश उद्देष्टव्य इति। भिक्षवस्तस्य लयनं गच्छन्ति। ते तत्र न यापयन्ति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न लयने उद्देष्टव्यम्। ते प्रासादे उद्दिशन्ति। तत्रापि न यापयन्ति। भगवानाह। संघस्य पोषधामुखं संमन्तव्यम्। उक्तं भगवता संघस्य पोषधामुखं संमन्तव्यमिति। ते न जानते कुत्र संमन्तव्यमिति। भगवानाह। यद्वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखमभिभवितं तत् संघे[न] संमन्तव्यम्। एवं च पुनः संमन्तव्यम्। शयनासन[प्र]ज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे सन्निषण्णे सन्निपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। इदं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखमभिभवितम्। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघ इदं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखं संमन्येत। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। इदं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखमभिभवितं तत्

1 Tib 136b, l. 4.

संघ एवं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखं संमन्यते। यथा चायुष्मतां क्षमते इदं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखं संमन्तुं स तूष्णीम्। न क्षमते भाषताम्। संमतं संघेन इदं वास्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्यामोपचारं संघस्य पोषधामुखं क्षान्तमनुज्ञातं संघेन यस्मात् तूष्णीम् एवमेतद् धारयामि। यत्र संघेन पोषधामुखं संमतं भवति तत्र भिक्षुभिर्निषद्य पोषधः कर्तव्यः प्रवारणा ज्ञप्तिः। ज्ञप्तिद्वितीयं ज्ञप्तिचतुर्थं कर्म कर्तव्यम्। व्यग्राः कुर्वन्ति सातिसारा भवन्ति।

उद्दानम्

कप्फिणेन कृता सीमा चीवरं तत्र सम्मतम्।
अबद्धसीम आवासे अभिनिर्हारमुखेन च।
अकर्म च प्रातिमोक्षेषु मुखां पंच समुद्दितम्॥

राजगृहनिदानम्। तेन खलु समयेनायुष्मान् ब्राह्मणकप्फिणो राजगृहे विहरति सेनिकगुहायामेकपोषधावाससंवास[सं]वृत्त्या संघस्य। अथ संबहुला भिक्षवः तदेव पोषधे पंचदश्यां पोषधामुखे सन्निषण्णाः सन्निपतिताः यत्तु यदा आयु[ष्मन्तं] सीमान्तं ब्राह्मणकप्फिणमागमयमानाः। अथ आयुष्मतो ब्राह्मणकप्फिणस्यैतदभवत्। अद्य संघस्य पोषधपंचदशिका ममापि कप्फिणस्य भिक्षोः पोषधपञ्चदशिका किन्नु गच्छेयं संघस्य [पोषधा]मुखम् आहोस्वित् न गच्छेयं संघस्य पोषधामुखम्। किं नु प्रत्यनुभवेयं संघेन सार्धं पोषधामुखमाहोस्विन्न प्रत्यनुभवेयम्।

[किं नु] संघस्य संघकृत्येषु संघ[क]रणीयेषु [गच्छेयम्] आहोस्विन्न गच्छेयम्। किं नु प्रत्यनुभवेयं संघेन सार्धं संघकृत्यानि संघकरणीयान्याहोस्वित् न प्रत्यनुभवेयम्। उक्तं च भगवता

शुद्धस्य हि सदा फल्गु सदा शुद्धस्य पोषधः।
शुचिकर्मणो हि शुद्धस्य तस्य सम्पद्यते व्रतम्॥ इति।

शुद्धोऽहमस्मि परमया शुद्ध्या समन्वागतः।

अथ भगवान् ब्राह्मणकप्फिणस्य चेतसा चित्तमाज्ञाय वेणुवनेऽन्तर्हितः सेनिकगुहायां प्रत्यष्ठात् आयुष्मतो ब्राह्मणकप्फिणस्य पुरतः। एवं चाह। ननु ते कप्फिण एकाकिनो रहोगतस्य प्रतिसंलीनस्यैवं चेतसि चेतःपरिवितर्क उदपादि। अद्य संघस्य पोषधपंचदशिका ममापि कप्फिणस्य भिक्षोः पोषधपंचदशिका पूर्ववत् यावत् तस्य सम्पद्यते व्रतमिति। शुद्धोऽहमस्मि परमया शुद्ध्या समन्वागत इति। एवं भदन्तः। त्वं तावत् कप्फिण न गमिष्यसि संघस्य पोषधामुखं कोऽन्यो गमिष्यति। त्वं न प्रत्यनुभविष्यसि संघेन सार्धं पोषधं कोऽन्यः प्रत्यनुभविष्यति। त्वं न गमिष्यसि संघस्य संघकृत्येषु संघकरणीयेषु कोऽन्यो गमिष्यति। त्वं न प्रत्यनुभविष्यसि संघेन सार्धं संघकृत्यानि संघकरणीयानि कोऽन्यः प्रत्यनुभविष्यति। गच्छ त्वं कप्फिण संघस्य पोषधामुखं मा न गच्छ। प्रत्यनुभव त्वं संघेन सार्धं पोषधं मा न प्रत्यनुभव। गच्छ त्वं कप्फिण संघस्य संघकृत्येषु संघकरणीयेषु मा न गच्छ। प्रत्यनुभव त्वं संघेन सार्धं संघकृत्यानि संघकरणीयानि मा न प्रत्यनुभव।

अथ भगवानायुष्मन्तं ब्राह्मणकप्फिणमादाय येन पोषधामुखं तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य च भगवान् भिक्षून् आमन्त्रयते स्म। तस्मात्तर्हि भिक्षवः अनुजानामि। भिक्षुभिरेकपोषधावाससंवृत्त्या महती सीमा बद्धव्या। उक्तं भगवता एकपोषधावाससंवृत्त्या महती सीमा बद्धव्या इति। भिक्षवो न जानते कथं बद्धव्येति।

भगवानाह। पूर्वं तावदावासिकनैवासिकैर्भिक्षुभिर्महत्याः सीमायाश्चतुर्दिशं स्थावरनिमित्तानि संलक्षयितव्यानि। पूर्वस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा। दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा[1]। ततः पश्चात् शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे सन्निषण्णे सन्निपतिते आवासिकनैवासिकैर्भिक्षुभिर्महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तयितव्यानि। पूर्वस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा। दक्षिणस्यां दिशि पश्चिमायामुत्तरस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्मिन् आवासे आवासिकनैवासिकै-

1 Tib. 139b, 1. 5.

भिक्षुभिर्महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि। पूर्वस्यां दिशि कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा। दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि [कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा]। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत् संघः एषां निमित्तानामर्वागेकपोषधावाससंवृत्त्या[1] महतीं सीमां बध्नीयात् यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्मिन् आवासे आवासिकनैवासिकैर्भिक्षुभिर्महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि। पूर्वस्यां दिशि कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं [वा]। दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा। तत् संघस्तथा [निमित्तानाम]र्वागेकपोषधावाससंवृत्त्या महतीं सीमां बध्नाति यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च। एषामायुष्मतां क्षमते एषां निमित्तानामर्वागेकपोषधावाससंवृत्त्या संघस्य महतीं सीमां बद्धुं यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च स तूष्णीम्। न क्षमते भाषताम्।

1 Tib. 140a, l. 6.

बद्धा संघेन एषां निमित्तानामर्वागेकपोषधावाससंवृत्त्या संघस्य महतीं सीमां यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च। क्षान्तमनुज्ञातं संघेन यस्मात् तूष्णी-मेवमेतद् धारयामि। यत्र संघेन महती सीमा बद्धा भवति तत्र भिक्षुभिर्निषद्य पोषधः कर्तव्यः प्रवारणाच। ज्ञप्तिद्वितीयं ज्ञप्ति-चतुर्थं कर्म कर्तव्यम्। व्यग्राः कुर्वन्ति सातिसारा भवन्ति।

भिक्षवस्त्रिचीवरं गृहीत्वा दिवाविहारं गच्छन्ति। खेदमापद्यन्ते। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। महत्याः सीमाया अर्वाक् सर्वेषां भिक्षूणां चीवरकाणामविप्रवाससंवृत्ति-र्दातव्या। एवं च पुनर्दातव्या। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमा-कोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे सन्निषण्णे सन्नि-पतिते एकेन हि भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्मिन् आवासे समग्रेण संघेन एकपोष-धावाससंवाससंवृत्त्या संघस्य महती सीमा बद्धा। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत्संघो महत्याः सीमाया अर्वाक् सर्वेषां भिक्षूणां चीवरकाणामविप्रवाससंवृत्तिं दद्यात्। इत्येषा ज्ञप्तिः। एवं कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। अस्मिन् आवासे समग्रेण संघेनैक-पोषधावाससंवाससंवृत्त्या संघस्य महती सीमा बद्धा। तत् संघो महत्या सीमया सर्वेषां भिक्षूणां चीवरकाणामविप्रवाससंवृत्तिं ददाति। एषामायुष्मतां क्षमन्ते महत्या सीमया सर्वेषां भिक्षूणां चीवरकाणाम-विप्रवाससंवृत्तिं दातुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्।

संघेन महत्या सीमया सर्वेषां भिक्षूणां चीवरकाणामविप्रवास-संवृत्तिः क्षान्तमनुज्ञातं संघेन यस्मात् तूष्णीमेवमेतद् धारयामि। यत्र संघेन महत्याः सीमाया अर्वाक् भिक्षूणां चीवरकाणामवि-प्रवाससंवृत्तिर्दत्ता भवति भिक्षूणां सान्तरोत्तरेण गन्तव्यम्। नात्र कौकृत्यं करणीयम्।

भिक्षूणां चतुर्वर्गकरणीयानि कर्माणि भवन्ति। पञ्चवर्ग-करणीयानि दशवर्गकरणीयानि कर्माणि भवन्ति। ते सर्वसङ्घं सन्निदाहयन्ति[1]। भिक्षूणां कुशलपक्षपरिहानिर्भवति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। खुद्दलिका सीमा बद्धव्या। संमन्तव्यं मण्डलकम्। एवं च पुनर्बन्द्धव्या। पूर्वं तावत् महती सीमा मोक्तव्या। एवं च पुनर्मोक्तव्या। शयना-सन[प्र]ज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे सन्निषण्णे सन्निपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। यावदेवास्मिन् आवासे सम-ग्रेण संघेन एकपोषधावाससंवाससंवृत्त्या महती सीमा बद्धा स चेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत्सङ्घो महतीं सीमां मुंचेत। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः सङ्घः। यावदेवास्मिन्नावासे समग्रेण सङ्घेन एकपोषधावाससंवाससंवृत्त्या महती सीमा बद्धा तत् सङ्घो

1 Tib. 140b, l. 4: སྡུད་པར་བྱེད་པ་ན། =to collect, सञ्चय।

महती सीमां मुंचति। एषां चायुष्मतां क्षमन्ते महतीं सीमां मोक्तुं ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। इयं प्रथमा कर्मवाचना द्वितीया तृतीया कर्मवाचना। मुक्ता संघेन महती सीमा। क्षान्तमनुज्ञातं संघेन यस्मात् तूष्णीमेवमेतद् धारयामि।

ततः पश्चात् आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि संलक्षयितव्यानि। पूर्वस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथयितव्यं शिला वा उच्छ्रापयितव्या कीलको निखन्तव्यः। दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथयितव्यं शिला [वा] उच्छ्रापयितव्या निमित्तं वा कीलको वा निखन्तव्यः।

ततः पश्चात् शयनासन[प्र]ज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसङ्घे सन्निषण्णे सन्निपतिते आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तयितव्यानि पूर्वस्यां दिशि कुड्यनिमित्तं वा [वृक्षनिमित्तं वा] शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथितं शिला वा उच्छ्रापिता कीलका निखाताः। दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथितं शिला वा उच्छ्रापिता कीलका निखाताः। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः सङ्घः। यावदेवास्मिन् आवासे आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिका[याः] सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि। पूर्वस्यां दिशि कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथितं शिला वा उच्छ्रापिता कीलका वा निखाताः। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् सङ्घो यत् सङ्घः एषामर्वाक् खुद्दलिकां सीमां बध्नीयात् संमन्येत मण्डलकम्। एषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

शृणोतु भदन्तः सङ्घः। यावदेवास्मिन् आवासे आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि। पूर्वस्यां दिशि कुडयनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथितं शिला वा उच्छ्रापिता [कीलका वा निखाताः।] तत् सङ्घ एषामर्वाक् खुद्दलिकां सीमां बध्नाति संमन्यते मण्डलकम्। येषामायुष्मतां क्षमते एषामर्वाक् खुद्दलिकां सीमां बद्धुं स तूष्णीम्। न क्षमते भाषताम्। बद्धा संघेन एषां निमित्तानामर्वाक् खुद्दलिका सीमा संमतं मण्डलकम्। क्षान्तमनुज्ञातं सङ्घेन यस्मात् तूष्णीमेवमेतद् धारयामि।

ततः पश्चान्महती सीमा बद्धव्या। एवं च पुनर्बद्धव्या। पूर्वं तावन्महत्याः सीमाया आवासिकनैवासिकैर्भिक्षुभिश्चतुर्दिशं स्थावराणि निमित्तानि संलक्षयितव्यानि पूर्ववद् विस्तरेण वाच्यम्।

ततः पश्चान्महत्याः सीमाया अर्वाग् भिक्षूणां चीवरकाणामवि-

प्रवाससंवृत्तिर्दातव्या। एवं च पुनर्दातव्या शयनासनप्रज्ञप्तिं कृत्वा पूर्ववद् विस्तरेण।

आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति। अबद्धसीमे भदन्तावासे का सीमा। कुड्यान्तरमुपालिन् सामन्तकेन। ये कुड्यस्याभ्यन्तरे भिक्षवः प्रतिवसन्ति तैरेकध्ये निषद्य पोषधः कर्तव्यः प्रवारणा च। ज्ञप्तिद्वितीयं ज्ञप्तिचतुर्थं कर्म कर्तव्यम्। व्यग्राः कुर्वन्ति सातिसारा भवन्ति[1]।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। अग्रामके भदन्त अरण्यायतने का सीमा। क्रोशमुपालिन् सामन्तकेन। ये क्रोशस्याभ्यन्तरे भिक्षवः प्रतिवसन्ति सर्वैस्तैरेकध्ये निषद्य पोषधः प्रवारणा विस्तरेण। व्यग्राः कुर्वन्ति सातिसारा भवन्ति[1]।

आयुष्मानुपाली बुद्धं भगवन्तं पृ[च्छ]ति। लभ्यं भदन्त एकया ज्ञप्त्या एकेन कर्मकारकेण एकया कर्मवाचनया सान्तर्बहिर्मुखीं सीमामभिहर्तुं वाभिनिर्हर्तुं वा[2]। लभ्यमुपालिन्। तत्रायमभिसंहारसंकोचः। तत्रायमभिनिर्हारविस्तरः[3]। एवं च पुनः कर्तव्यम्। पूर्वं तावन्महती सीमा मोक्तव्या [ततः] खुद्दलिका सीमा। प्रतिप्रस्रंभितव्यं[4] मण्डलकम्। एवं च पुनर्मोक्तव्या। शयना-

1 These two paras are placed in Tibetan after पूर्ववत् यावत् in p. 94.

2 Tib. 144a, l. 1: བསྐྱུར་བ་དང་བསྐྱེད་པར་རུང་ངམ།

3 Tib. 144a, l. 2: དེ་ལ་བསྐྱུར་བ་ནི་འདི་ཡིན་ཏེ་ཆུང་དུའོ། དེ་ལ་བསྐྱེད་པ་ནི་འདི་ཡིན་ཏེ་ཆེན་པོའོ།

4 Tib. 144a, l. 2: གཞིག་པར་བྱའོ།

सनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसङ्घे सन्निषण्णे सन्निपतिते उभयतः सीमायाः सङ्घं स्थापयित्वा[1] कर्मकारकेण भिक्षुणा तत्र सीमे काष्ठेन वा दण्डेन वा कीलकेन वा किलिञ्जेन वावस्थाप्य ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः सङ्घः। यावदेवास्मिन् आवासे समग्रेण संघेन एकपोषधावाससंवाससंवृत्त्या महती सीमा बद्धा खुद्दलिका सीमा बद्धा संमतं मण्डलकम्। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् सङ्घो यत् सङ्घो महतीं सीमां मुंचीत खुद्दलिकां सीमां मुंचीत प्रतिप्रस्रंभेत मण्डलकम्। एषा ज्ञप्तिः। एवं च कर्म कतव्यम्।

शृणोतु भदन्तः सङ्घः। यावदेवास्मिन्नावासे समग्रेण सङ्घेन एकपोषधावाससंवाससंवृत्त्या महती सीमा बद्धा खुद्दलिका सीमा बद्धा संमतं मण्डलकम्। तत्र सङ्घो महतीं सीमां मुंचति खुद्दलिकां सीमां मुंचति प्रतिप्रस्रंभति मण्डलकम्। येषामायुष्मतां क्षमते महतीं सीमां मोक्तुं [खुद्दलिकां सीमां मोक्तुं] प्रतिप्रस्रब्धुं मण्डलकं स तूष्णीम्। न क्षमते भाषताम्। इयं प्रथमा कर्मवाचना द्वितीया तृतीया कर्मवाचना। मुक्ता सङ्घेन महती सीमा मुक्ता खुद्दलिका सीमा प्रतिप्रस्रब्धं मण्डलकम्। क्षान्तमनुज्ञातं सङ्घेन यस्मात् तूष्णीमेवमेतद् धारयामि[2]।

ततः पश्चादावासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमाया-

1 Tib. 144a, l. 3: མཚམས་གཉི་གར་དགེ་འདུན་བཀོད་དེ །

2 Ms. adds here this line तत्र यदिच्छन्ति वाचयितव्यः। नोचेत् संकोचयितव्यः। But it is wanting in Tibetan.

श्चतुर्दिशं स्थावराणि निमित्तानि संलक्षयितव्यानि। पूर्वस्यां दिशि कुड्यनिमित्तं वा वृक्षनिमित्तं वा शैलनिमित्तं वा प्राकारनिमित्तं वा प्राग्भारनिमित्तं वा मार्गिकं वा कथयितव्यं शिला वा उच्छ्रापयितव्या कीलका वा निखन्तव्याः। यथा पूर्वस्यां दिश्येवं दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि।

ततः पश्चात् शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्ट-वाचिकया भिक्षून् समनुयुज्य सर्वसङ्घे सन्निषण्णे सन्निपतिते आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावरनिमित्तानि परिकीर्तयितव्यानि पूर्ववद् यावत् कीलका निखाताः। महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्त्तयितव्यानि पूर्ववद् यावत् प्राग्भारनिमित्तं वा। ततः पश्चात् उभयतः सीमायां सङ्घं स्थापयित्वा[1] कर्मकारकेण भिक्षुणा तत्र सीमे काष्ठेन वा दण्डेन वा कीलकेन वा किलिञ्जेन वा अवस्थाप्य[2] ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। यावदेवास्मिन्नावासे आवासिक-नैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावरनिमित्तानि परिकीर्तितानि पूर्ववद् यावत्[3] कीलका निखाताः। महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि

1 Tib. 145a, 1, 4: བཀོད་དེ=arranging रचयित्वा।

2 Tib. 145a, l. 5: སེག་མ་རེ་བྲེས་མནན་ནས།

3 In the Tibatan version, the whole passage is repeated again and again. In this text, however, the repetition is avoided by the use of the words पूर्ववत् यावत्।

परिकीर्तितानि पूर्ववद् यावत् प्राग्भारनिमित्तं वा। सचेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत् संघः एषामर्वाक् खुद्दलिकां सीमां बध्नीयात् संमन्येत मण्डलकम्। तेषामाघटनानामर्वाक्[1] एकपोषधावाससंवाससंवृत्त्या महतीं सीमां बध्नीयात् यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च। एषा ज्ञप्तिः। एवं कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। यावदेवास्मिन्नावासे आवासिकनैवासिकैर्भिक्षुभिः खुद्दलिकायाः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि पूर्ववद् यावत् कीलका निखाताः। महत्याः सीमायाश्चतुर्दिशं स्थावराणि निमित्तानि परिकीर्तितानि पूर्ववद् यावत् प्राग्भारनिमित्तं वा। तत् संघः एषामाघटनानामर्वाक् खुद्दलिकां सीमां बध्नाति संमन्यते मण्डलकम्। तेषामाघटनानामर्वाक् एकपोषधावाससंवाससंवृत्त्या महतीं सीमां बध्नाति यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च ग्रामोपचारं च। येषामायुष्मतां क्षमते एषामाघटनानामर्वाक् खुद्दलिकां सीमां बद्धुं संमन्तुं मण्डलकं तेषामाघटनानामर्वाक् एकपोषधावाससंवाससंवृत्त्या महतीं सीमां बद्धुं स्थापयित्वा ग्रामं च ग्रामोपचारं च ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। बद्धा संघेन एषामाघटनाना[मर्वाक्] खुद्दलिका सीमा संमतं मण्डलकम्। तेषामाघटनानामर्वागेकपोषधावाससंवाससंवृत्त्या महती सीमा [बद्धा] यावच्चारण्यं यावच्च शयनासनं स्थापयित्वा ग्रामं च

1 आघटन=निमित्त as per Tibetan.

ग्रामोपचारं च। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि। ततः पश्चात् खुद्दलिकायाः सीमाया निर्यात्य/महत्यां सीमायां शयनासनप्रज्ञप्तिं कृत्वा भिक्षूणां चीवरकाणाम् अविप्रवाससंवृत्तिर्दातवया पूर्ववद् यावत्।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। कति भदन्त पोषधकर्माणि। चत्वारि उपालिन्। अधर्मेण कुर्वन्ति व्यग्राः। अधर्मेण समग्राः। धर्मेण व्यग्राः। धर्मेण समग्राः। तत्रैकं धार्मिकं पोषधकर्म यदिदं धर्मेण कुर्वन्ति समग्राः[1]।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। कति भदन्त प्रातिमोक्षसूत्रोद्देशाः। पञ्च उपालिन्। ज्ञप्तिं कृत्वा निदानमुद्दिश्य अवशिष्टं श्रुतेन श्रावयन्ति। उद्दिष्टः प्रातिमोक्षः कृतः सङ्घेन पोषधः। ज्ञप्तिं कृत्वा निदानमुद्दिश्य चतुरः पाराजिकान् धर्मानुद्दिश्य अवशिष्टं श्रुतेन श्रावयन्ति। उद्दिष्टः प्रातिमोक्षः कृतः सङ्घेन पोषधः। ज्ञप्तिं कृत्वा निदानमुद्दिश्य चतुरः पाराजिकान् धर्मानुद्दिश्य त्रयोदश सङ्घावशेषान् धर्मानुद्दिश्य अवशिष्टं श्रुतेन श्रावयन्ति। उद्दिष्टः प्रातिमोक्षः कृतः सङ्घेन पोषधः। ज्ञप्तिं कृत्वा निदानमुद्दिश्य चतुरः पाराजिकान् धर्मानुद्दिश्य त्रयोदश संघावशेषान् धर्मान् द्वावनियतौ धर्मौ उद्दिश्य अवशिष्टं श्रुतेन श्रावयन्ति। उद्दिष्टः प्रातिमोक्षः कृतः संघेन पोषधः। विस्तरेण प्रातिमोक्षसूत्रोद्देश एव पंचमः[2]।

1 Cf. *Mahāvagga*, II. 14.

2 Cf. *Ibid.*, II. 15.

[ उद्दानम् ]

आवासवर्षा आगन्तुकचारिकायां पञ्च ।
पोषधरात्रिश्चातिक्रामति चित्तोत्पादेन पोषधः ॥

यथापि तदन्यतमस्मिन् आवासे सम्बहुला भिक्षवः प्रतिवसन्ति। तेषामेवं भवति। अमुकस्य भिक्षोर्द्दिश्यते[1] प्रातिमोक्षः अमुकस्य भिक्षोर्द्दिश्यते[2] प्रातिमोक्ष इति। तेषां तदेव पोषधे पंचदश्यां न कस्यचित् भिक्षोर्द्दिश्यते प्रातिमोक्षः[3]। [भगवानाह।] तैर्भिक्षुभिर्भिक्षुः पर्येषितव्यो [4]वास्तुपरिहारेण शयनासनपरिहारेण लाभपरिहारेण उपस्थापकपरिहारेण यस्य [कस्यचित्] भिक्षोर्द्दिश्यते प्रातिमोक्षः। सचेत् संपद्यते इत्येवं कुशलं नो चेत् संपद्यते न तैर्भिक्षुभिरस्मिन् आवासे अन्यपोषधम् आगमयितव्यम्। [आगमयन्ति] सातिसारा भवन्ति।

यथापि तदन्यतमस्मिन् आवासे सम्बहुला भिक्षवः पूर्विकां वर्षामुपगन्तुकामा भवन्ति। तेषामेवं भवति अमुकस्य भिक्षोर्द्दिश्यते प्रातिमोक्ष इति। तेषां तदेव पोषधे पंचदश्यां न कस्यचिद् भिक्षोर्द्दिश्यते प्रातिमोक्ष इति। तैर्भिक्षुभिर्भिक्षुः पर्येषि[तव्यः] वास्तुपरिहारेण शयनासनपरिहारेण कर्मपरिहारेण लाभपरिहारेण उपस्थापकपरिहारेण यस्य कस्यचित् भिक्षोर्द्दिश्यते प्रातिमोक्षः सचेत् संपद्यते इत्येवं कुशलं नो चेत् संपद्यते न तैर्भिक्षुभिः

1 In Tibetan, the repetition does not appear.

2 Ms. भिक्षोर्दिश्यते ; Tib. 147b, l. 4: སྟོང་ངོ །

3 Ms. भिक्षोरुद्दिश्यते ; Tib. 147b, l, 5: མི་སྟོང་ནས །

4 Tib. Ibid., གནས་བསྟབས །

अस्मिन् आवासे पूर्विकां वर्षामुपगन्तव्यम्। उपगच्छन्ति सातिसारा भवन्ति।

[यथा]पि तदन्यतमस्मिन् आवासे सम्बहुला भिक्षवः पूर्विकां वर्षामुपगता भवन्ति अमुकस्य भिक्षोद्दिश्यते प्रातिमोक्षः अमुकस्य भिक्षोद्दिश्यते प्रातिमोक्ष इति। तेषां तदेव पोषधे पंचदश्यां न कस्यचिद् भिक्षोद्दिश्यते प्रातिमोक्ष इति। स तैर्भिक्षुभिर्भिक्षुः पर्येषितव्यः [1]वास्तुपरिहारेण कर्मपरिहारेण लाभ-परिहारेण [2]उपस्थापकपरिहारेण यस्य भिक्षोद्दिश्यते प्रातिमोक्षः सचेत् संपद्यते इत्येवं कुशलं नोचेत् संपद्यते न तैर्भिक्षुभिरस्मिन् आवासे पूर्विकां वर्षां वस्तव्यम्। वसन्ति सातिसारा भवन्ति।

यथापि तदन्यतमस्मिन् आवासे संबहुला भिक्षवः पश्चिमिकां वर्षामुपगन्तुकामा भवन्ति। तेषामेवं भवति अमुकस्य भिक्षो-द्दिश्यते प्रातिमोक्षः अमुकस्य भिक्षोद्दिश्यते प्रातिमोक्ष इति। तेषां च तदेव पोषधे पञ्चदश्यां न कस्यचिद् भिक्षोद्दिश्यते प्रातिमोक्ष इति। स तैर्भिक्षुभिर्भिक्षुः पर्येषितव्यो वास्तुपरिहारेण शयनासनपरिहारेण उपस्थापकपरिहारेण यस्य भिक्षोद्दिश्यते प्रातिमोक्षः। सचेत् संपद्यते इत्येवं कुशलं नोचेत् संपद्यते न तैर्भिक्षुभिरस्मिन् आवासे पश्चिमिकां वर्षामुपगन्तव्यम्। उपगच्छन्ति सातिसारा भवन्ति।

1 Tib. 148a, l. 6: གཞིས།.

2 Tib. 148a, l. 7: བསྙེན་བཀུར=उपस्थान ; पर्युपासना।

यथापि तदन्यतमस्मिन् आवासे सम्बहुला भिक्षवः पश्चिमिकां[1] वर्षामुपगता भवन्ति। तेषामेवं भवति अमुकस्य भिक्षोद्दे श्यते प्रातिमोक्षः अमुकस्य भिक्षोद्दे श्यते प्रातिमोक्ष इति। तेषां तदेव पोषधे पंचदश्यां न कस्यचिद् भिक्षोद्दे श्यते प्रातिमोक्षः। तैर्भिक्षुभिरस्मिन् आवासे द्वौ मासौ प्रतिसंख्यया वस्तव्यम्। द्वयोर्मासयोरत्ययाद् भिक्षुः पर्येषितव्यो वास्तुपरिहारेण शयनासन-परिहारेण कर्मपरिहारेण लाभपरिहारेण उपस्थापकपरिहारेण [वा] यस्य कस्यचिद् भिक्षोद्दे श्यते प्रातिमोक्षः। सचेत् संपद्यते इत्येवं कुशलम्। नोचेत् संपद्यते न तैर्भिक्षुभिरस्मिन् आवासे अन्यपोषधम् आगमयितव्यम्[2]। आगमयन्ति सातिसारा भवन्ति।

आयुष्मानुपाली बुद्धं भगवन्तं पृच्छति। यथापि तद् भदन्त नैवासिका भिक्षवः शृण्वन्ति आगन्तुका भिक्षवः आगच्छन्ति सूत्र-धरा विनयधरा मातृकाधरा इति। तैस्तेषां कथं प्रतिपत्तव्यम्। तैरु-पालिन् भिक्षुभिः सूत्रधर-विनयधर-मातृकाधराणां भिक्षूणामर्थाय अर्धतृतीयानि योजनानि छत्रध्वजपताकाभिः प्रत्युद्गन्तव्यम्। सचेत् सम्पद्यते इत्येव कुशलं नोचेत् सम्पद्यते पंच क्रोशान् छत्रध्वज-पताकाभिः प्रत्युद्गन्तव्यम्। सचेत् सम्पद्यते इत्येवं कुशलं नोचेत् सम्पद्यते त्रीन् क्रोशान् अर्धक्रोशमन्ततः परिषण्डमपि छत्रध्वज-पताकाभिः प्रत्युद्गन्तव्यम्। सचेत् सम्पद्यते इत्येवं कुशलं नोचेत्

1 Ms. has both पश्चिमकां and पश्चिमिकां

2 Tib. 148b, l. 4: བསྒུད་པར=to expect.

सम्पद्यते स्नात्रं कर्तव्यम्। संघे स्नेहलाभः[1] कर्तव्यः। 'तेषां वास्तुपरिहारः शयनासनपरिहारः कर्मपरिहारो लाभपरिहारः उपस्थापकपरिहारश्च दातव्यः। सचेत् तत्र कश्चिदेवं वदेत् सामनिकायाम्[2] आयुष्मन्तः प्रव्रज्यायां कस्मा एते भिक्षवोऽर्हन्ति न वयमिति। स इदं स्याद् वचनीयः। अतीतशास्त्रके आयुष्मन् प्रवचने एष शास्ता एष प्रतिशरणं यदुत सूत्रविनयमातृकाश्चेति। स चैषाम् आयुष्मतां विस्तरेणोद्दिष्टः प्रवृत्तश्चेति। तस्मादेते अर्हन्ति न त्वमिति[3]।

यथापि तदेव पोषधे पंचदश्यां सार्धंविहार्यन्तेवासिका भिक्षवो जनपदचारिकां चर्तुकामा भवन्ति। तेषामाचार्योपाध्यायैर्न केनचित् भिक्षुकारेण[4] ऊर्ध्वलोकना[5] दातव्या। सचेत् [एवं]-रूपं प्रत्ययो भवति वक्तव्यः। आयुष्मन् अमुक आवासः सस्थविरः सप्रातिमोक्षः। सचेत् तत्रोक्ता[6][दावासाद्] अन्यत्रावतरन्ति सातिसारा भवन्ति।

अथ भगवान् तदेव पोषधे पंचदश्यां पुरस्ताद् भिक्षुसंघस्य

1 Tib. 149a, l. 1: སྣུམ་བག་གི་རྙེད་=स्नेह (=तैल) लाभः।

2 Tib. 149a, l. 2: འདུན།

3 Cf. *Mahāvagga*, II. 21.

4 Not found in Tibetan.

5 Tib. 142a, l. 4: གནང་བར་=अधिवासना।

6 Tib. 149a, l. 6: གལ་ཏེ་བསྟན་པ་དེ་ལས་ གཞན་དུ་འཇུག་ན་ འགལ་

प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षून् आमन्त्रयते स्म। निर्गच्छति भिक्षवो रात्रिः कुरुत भिक्षवः पोषधम्।

अथ अन्यतमो भिक्षुरुत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अन्यतमस्मिन् भदन्त आवासे भिक्षुराबाधिको दुःखितो वाढ़ग्लानः। तस्यास्माभिः कथं प्रतिपत्तव्यम्। भगवानाह। पारिशुद्धिरस्य आनयितव्या। उक्तं भगवता पारिशुद्धिरस्य आनयितव्येति। भिक्षवो न जानते कथमानयितव्येति। भगवानाह। एकस्य एकेन द्वाभ्यामेकेन सम्बहुलानां यावतां वा शक्नोति संघमध्ये नामानि परिकीर्तयितुम्।

पारिशुद्धिदायकस्य अहं भिक्षवः आसमुदाचारिकान् धर्मान् प्रज्ञप[यिष्यामि। पारिशुद्धिदायको भिक्षुः एकांसमुत्तरासङ्गं कृत्वा[1]] उपानहौ अवमुच्य यथावृद्धिकया सामिचीं कृत्वा उत्कुटुकेन स्थित्वा अञ्जलिं प्रगृह्य इदं स्याद् वचनीयम्। समन्वाहर आयुष्मन् अद्य संघस्य पोषधपंचदशिका ममापि। एवंनाम्नः [आबाधिकस्य दुःखितस्य वाढ़ग्लानस्य] भिक्षोः पोषधपंच[दशिका। तस्यान्तरायिकान् धर्मानहं] वदामि। पोषधेऽस्य पारिशुद्धिमारोचयामि। आरोचितां च प्रवेदयामि। एवं द्विरपि एवं त्रिरपि। पारिशुद्धिदायको भिक्षुः सचेत् कायविज्ञप्त्या पारिशुद्धिं ददाति। दत्त्वा पारिशुद्धिर्वक्तव्या। वाग्वि[ज्ञप्त्या पारिशुद्धिं ददाति। दत्त्वा] पारिशुद्धिर्वक्तव्या। न कायविज्ञप्त्या न वाग्-

1 Tib. 149b, l. 4.

विज्ञप्त्या ददाति सर्वसंघेन वा तत्र गन्तव्यम्। स वा भिक्षुसंघ-मध्येऽवतारयितव्यः। न सर्वसंघस्तत्र गच्छति। तं च भिक्षुं संघे नावतारयिष्यन्ति वा व्यग्राः कुर्वन्ति सातिसारा भवन्ति। पारिशुद्धिदायको भिक्षुः] प्रज्ञप्तानासमुदाचारिकान् धर्मान् न समादाय वर्तते सातिसारो भवति।

पारिशुद्धिग्राहकस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। पारिशुद्धिग्राहकेण भिक्षुणा पारिशुद्धिं गृहीत्वा न धावितव्यं न द्रवितव्यं [न परिखा लंघ]यितव्या न परिषण्डे लंघयितव्यं[1] नोपरि विहायसा स्थातव्यं न बहिःसीमा गन्तव्या नैकेन पादेन द्वौ निश्रेणिपदकौ अभिभवितव्यौ नैकेन पादेन द्वौ सोपानकावेवाभिभवितव्यौ न स्वपितव्यं न समापत्तव्यम्। स्वपिति समापद्यते द्वाभ्यां कारणाभ्यां गर्ह्यो भवति यच्चालज्जित्वेन यच्च वैतरिकत्वेन।

यदा संघस्थविरः कथयति। अनागमनाय आयुष्मन्तश्छन्दं च पारिशुद्धिं च आरोचयत। आरोचितां च प्रवेदयतेति। तेनान्तरिकस्य भिक्षोः पुरतः स्थित्वा वक्तव्यम्। समन्वाहर आयुष्मन् अमुष्मिन्नावासे भिक्षुराबाधिको दुःखितो वाढग्लानः। अद्य संघस्य पोषधपंचदशिका तस्यापि भिक्षोः पोषधपंचदशिका। सोऽयमेवंनामा भिक्षुः परिशुद्धमान्तरायिकैः धर्मैरात्मानं वेदयति। पोषधेऽस्य पारिशुद्धिमारोचयामि आरोचितां च प्रवेदयामि। पारिशुद्धिग्राहको भिक्षुरासमुदाचारिकान् धर्मान् न समादाय वर्तते सातिसारो भवति।

1 Tib. 150a, 1, 4.

आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति। पारिशुद्धिग्राहकस्तावद् भदन्तो भिक्षुः पारिशुद्धिं गृहीत्वा तत्रैवोच्छेद्य कालं कुर्यात्। आनीता पारिशुद्धिर्वक्तव्या। अनानीता उपालिन् पुनरप्यानयितव्या। आगारिकत्वं प्रतिजानाति [1]समनुद्देशकत्वं षण्ढकत्वं पण्डकत्वं भिक्षुणीदूषकत्वं मातृघातकत्वं पितृघातकत्वमर्हद्घातकत्वं संघभेदकत्वं तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादकत्वं तीर्थिकत्वं तीर्थिकावक्रान्तकत्वं स्तेयसंवासिकत्वं नानासंवासिकत्वम् असंवासिकत्वं प्रतिजानाति। आनीता पारिशुद्धिर्वक्तव्या। अनानीता उपालिन् पुनरप्यानयितव्या। पारिशुद्धिग्राहकस्तावद् भदन्तो भिक्षुः पारिशुद्धिं गृहीत्वा संघमध्ये प्राप्तः कालं कुर्यात्। आनीता पारिशुद्धिर्वक्तव्या। अनानीता उपालिन् पुनरानयितव्या। आगारिकत्वं प्रतिजानाति पूर्ववद् यावत् असंवासिकत्वं प्रतिजानाति। आनीता पारिशुद्धिर्वक्तव्या। अनानीता उपालिन् पुनरानयितव्या।

आयुष्मान् उपाली बुद्धं भगवन्तं पृच्छति। यस्मिन् भदन्त आवासे एको भिक्षुः प्रतिवसति तेन तदेव पोषधे पंचदश्यां कथं प्रतिपत्तव्यम्। तेनोपालिन् भिक्षुणा विहारः सेक्तव्यः सम्मार्जयितव्यः सुकुमारी गोमयकार्षी अनुप्रदातव्या। सिंहासनं प्रज्ञपयितव्यम्। आसनप्रज्ञप्तिः कर्तव्या। धर्मश्रवणं दातव्यम्। ततः पश्चात् उच्चतरके.......[2]

1 Sans. श्रमण०

2 See Tib, 151b, l. 3f, Three leaves are lost here.

··सूत्रोद्देशमुद्दिशन्ति[1]। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। तैर्यथागतानि निषद्य तैः सार्धं पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णाः सन्निपतिता भवन्ति। चत्वारो वा उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतका इति। ते धर्मसंज्ञिनः[2] समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। अव्युत्थिता सा पर्षत्। अविप्रक्रान्ताश्च भिक्षवः। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतर[क]ाः। तैस्तेषामर्थाय पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णाः सन्निपतिताः। चत्वारो वा उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो[2] ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। व्युत्थिता सा पर्षत्। एकत्या भिक्षवो विप्रक्रान्ताः। [एकत्या अविप्रक्रान्ताः।] ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। ते यदि तावत्सामग्रीमारागयन्ति पुनरपि तैस्तेषामर्थाय ज्ञप्तिं कृत्वा पोषधः कर्तव्यः।

1 Cf. *Mahāvagga*, ii. 28.

2 Ms. throughout संगिनः for संज्ञिनः। Tib. ཆོས་ཀྱི་འདུ་ཤེས་ཅན་མཐུན་པའི་འདུ་ཤེས་ཅན།

प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। नोचेदारागयन्ति तैर्मण्डलकं गत्वा पोषधः कर्तव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा [भवन्ति] सन्निपतिताः। चत्वारो वा उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। व्युत्थिता सा पर्षत्। विप्रक्रान्ताश्च भिक्षवः। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। तैर्मण्डलकं गत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथा नैवासिकैः[1] सन्निषण्णैः सन्निपतितैः नैवासिका आगच्छन्त्यल्पाः समकाः। आगन्तुका आगच्छन्त्यल्पाः समकाः। आगन्तुकनैवासिका आगच्छन्त्यल्पाः समकाः। आगन्तुकनैवासिकैः सन्निषण्णैः सन्निपतितैः आगन्तुकनैवासिका आगच्छन्त्यल्पाः समकाः। नैवासिका आगच्छन्त्यल्पाः समकाः। आगन्तुका आगच्छन्त्यल्पाः समकाः[2] ।

पिण्डोद्दानम् । पंक्तिज्ञप्त्यादिमण्डलकञ्च[3] ।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। तेषां

1 Ms. यथाऽनैवा॰

2 In this text, the repetitions have been abridged. In Tibetan, the repetitions appear in extenso.

3 Tib. 191b, l. 4: གྲལ་རིམས་གསོལ་ཚོགས་དཀྱིལ་འཁོར་བཅས།

नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चान्नैवासिका भिक्षव आगच्छन्ति बहुतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो [वा] उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। अव्युत्थिता सा पर्षत्। अविप्रक्रान्ताश्च भिक्षवः। ततः पश्चान्नैवासिका भिक्षव आगच्छन्ति बहुतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। व्युत्थिता सा पर्षत्। एकत्या भिक्षवो विप्रक्रान्ताः। एकत्या अविप्रक्रान्ताः। ततः पश्चान्नैवासिका भिक्षव आगच्छन्ति बहुतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। तेषां नैवं भवति। सन्ति भिक्षवो येऽनागतकाः। ते धर्मसंज्ञिनः समग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। उद्दिष्टः प्रातिमोक्षः। कृतः संघेन पोषधः। व्युत्थिता सा पर्षत्। विप्रक्रान्ता भिक्षवः। ततः पश्चान्नैवासिका भिक्षवः आगच्छन्ति बहुतरकाः। [तैः] पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथा नैवासिकैः सन्निषण्णैः सन्निपतितैः नैवासिका भिक्षव आगच्छन्ति बहुतरकाः। एवमागन्तुका आगच्छन्ति बहुतरकाः। आगन्तुकनैवासिका आगच्छन्ति बहुतरकाः। आगन्तुकनैवासिकैः सन्निषण्णैः सन्निपतितैः आगन्तुका आगच्छन्ति बहुतरकाः। आगन्तुकनैवासिका आगच्छन्ति बहुतरकाः।

नैवासिकानां पञ्चदशी आगन्तुकानां चतुर्दशी वा प्रतिपद्वा[1]। [2]बहुतरकाणामनुवर्तितव्यम्। आगन्तुकैः नैवासिकानां बहुतरकाणाम्। नैवासिकानां पञ्चदशी आगन्तुकानां चतुर्दशी वा प्रतिपद्वा। समकानामनुवर्तितव्यम्। आगन्तुकैर्नैवासिकानां समकानाम्[3]। [नैवासिकानां पञ्चदशी] आगन्तुकानां चतुर्दशी प्रतिपद्वा। बहुतरकाणामनुवर्तितव्यम्। नैवासिकैरागन्तुकानां

1 Cf. *Mahāvagga*, II, 34. 2 Ms. अल्प०

3 Tib. 198b, l. 6.

बहुतरकाणाम्। आगन्तुकानां पञ्चदशी नैवासिकानां चतुर्दशी प्रतिपद्धा। बहुतरकाणामनुवर्तितव्यम्। नैवासिकैरागन्तुकानां बहुतरकाणाम्। आगन्तुकानां पञ्चदशी नैवासिकानां चतुर्दशी वा प्रतिपद्धा। समकानामनुवर्तितव्यम्। आगन्तुकैर्नैवासिकानां समकानाम्। आगन्तुकानां पञ्चदशी नैवासिकानां चतुर्दशी प्रतिपद्धा। बहुतरकाणामनुवर्तितव्यम्। आगन्तुकैर्नैवासिकानां बहुतरकाणाम्।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा [भवन्ति] सन्निपतिताः। चत्वारो वा उत्तरे वा। तत्र ते पश्यन्ति आगन्तुकाकाराणि [आगन्तुकलिंगानि] आगन्तुकनिमित्तानि। तद्यथा अज्ञातकं[1] पात्रं चीवरं यष्टिं विसिकां[2] कुण्डीं[3] तुम्बकं खोलान् पूलानुपानहौ[4]। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका [इति।] [येऽनाग]तका [तैर्विना कल्पयन्ति। तत्र निषण्णा एव कल्पयन्ति। पृथक् निषण्णा एव कल्पयन्ति।] नश्यन्तु ते अन्यत्र[5] एव भवन्तु पृथग्[6] भवन्तु[7] दूरेण भवन्तु परेण भवन्तु। ते भेदार्थिनो भेद-

1 Ms. अन्यादकं cf. Pāli अञ्ञातकं। 2 Sans. वृषिका ; see Mvyut. 272 59.

3 Mvyut. 272-16: कुण्डिका।

4 Tib. 199a. 1, 4: གཞན་གྱི་ལྷུང་བཟེད་དང་། ཆོས་གོས་དང་། ཁར་བ་དང་། གདུར་བུ་དང་། རིལ་བ་སྤྱི་བླུགས་དང་། འབྲུ་མར་སྣོད་དང་། ཞྭ་དང་། ལྷམ་སྒྲོ་གུ་ཅན་ཅན་དང་། མཆིལ་ལྷམ་དག །

5 Ms. अतएव भवन्तु ; cf. *Mahāvagga*, II. 32.

6 Ms. हिरुक 7 Ms. कुर्वन्ति।

परिष्कारा[1] ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति । प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति । ततः पश्चादागन्तुका भिक्षव आगच्छन्त्यल्पतरकाः । तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः । प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः । पूर्वका भिक्षव आपद्यन्ते स्थूलात्ययान् । ते भेदसामन्तकाः[2] ।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः । चत्वारो वा उत्तरे वा । ते तत्र पश्यन्ति आगन्तुकाकाराण्यागन्तुकलिंगान्यागन्तुकनिमित्तानि । तद्यथा अज्ञातकं पात्रं चीवरं यष्टिं विसिकां कुण्डीं तुम्बकं खोलान् पूलानुपानहौ । तेषामेवं भवति । सन्ति भिक्षवो येऽनागतकाः । भिक्षवो येऽनागतकाः कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम् । तेऽधर्मसंज्ञिनो व्यग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति । प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति । ततः पश्चादागन्तुका भिक्षव आगच्छन्त्यल्पतरकाः । तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः । प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः । पूर्वका भिक्षवः सातिसाराः । व्यग्रसामन्तकाः ।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः

1 Cf. *Mahāvagga*, II. 34: भेदपुरेक्खारा । In Sanskrit it should have been भेदपुरष्कृता ; strangely enough the Tibetans rendered the word by དབྱེན་གྱི་ཡོ་བྱད meaning भेदपरिष्कारा whereas it should have been མདུན་དུ་བདར་བ । It is an instance of careless Sanskritisation of Prakrit words. Another instance is अन्यादकं for अनञातकं=अज्ञातकं (see above, p. 107, f. n. 1), the Tibetan rendering being གཞན་གྱི ।

2 Cf. *Mvyut*. 678: ཉེར་བསྡོགས །=सामन्तकाः ।

सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्त्यागन्तुकाकाराण्यागन्तुकलिंगान्यागन्तुकनिमित्तानि। तद्यथा अज्ञातकं पात्रं चीवरं यष्टिं विसिकां[1] कुण्डीं तुम्बकं खोलान् पूलानुपानहौ। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतकाः कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम्। ते कल्पार्थिनः कल्पपरिष्कारा[2] यावत्तावन्मार्गित्वा ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ते ततः पश्चादागन्तुका भिक्षव आगच्छन्त्यल्पतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवः सातिसाराः। कल्पसामन्तकाः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्त्यागन्तुकाकाराण्यागन्तुकलिंगान्यागन्तुकनिमित्तानि। तद्यथा अज्ञातकं पात्रं चीवरं यष्टिं विसिकां[1] कुण्डीं तुम्बकं खोलान् पूलानुपानहौ। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतका न कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम्। [1]तानध्याशयनं मार्गयित्वा न लभन्ते। ते ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चादागन्तुका भिक्षव आगच्छन्त्यल्पतरकाः।

1 Sane, बृषिकां।

2 Tib. 200a. 1. 5 : རྟོག་པས་དོན་དུ་གཉེར་བ་རྟོག་པའི་ཡོ་བྱད་ཅན།

The word परिष्कारा should be परष्कृता।

तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पंचदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्त्यागन्तुकाकाराण्यागन्तुकलिंगान्यागन्तुकनिमित्तानि। तद्यथा अज्ञातकं पात्रं चीवरं यष्टिं विसिकां[1] कुण्डीं तुम्बकं खोलान् पूलानुपानहौ। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतका न कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम्। [2]ते तानध्याशयनं मार्गित्वा लभन्ते। तैः सार्धं निषद्य पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। पूर्वका भिक्षवो न सातिसाराः।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्ष[वः] सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। तत्र गृह्णन्त्यागन्तुकाकाराण्यागन्तुकलिंगान्यागन्तुकनिमित्तानि। तद्यथा यष्टिशब्दं पदशब्दमुत्कासनशब्दमागन्तुकानां भिक्षूणां स्वरगुप्तिम्। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतकाः। नश्यन्तु ते अन्यत्र एव भवन्तु पृथग् भवन्तु। [ते] भेदार्थिनो भेदपरिष्कारा ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चादागन्तुका भिक्षव आगच्छन्त्यल्पतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षव आपद्यन्ते स्थूलात्ययान्। भेदसामन्तकाः।

1 Sans. वृषिकां। 2 Ms. ते तानध्याशयनं वा पति ते तानध्याशयनं मार्गित्वा।

यथापि तत्तदेव पोषधे पञ्चदश्यां नैवासिका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। तत्र गृह्णन्त्यागन्तुकानां पूर्ववद्यावत् ते तानध्याशयनं मार्गन्ति। लभन्ते ते। तैः सार्धं निषद्य पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। पूर्वका भिक्षवो न सातिसाराः।

यथा नैवासिकैः सन्निषण्णैः सन्निपतितैरागन्तुका आगच्छन्त्यल्पा एवं समका बहुतरकाः।

यथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णाः सन्निपतिताः। चत्वारो वा उत्तरे वा। [ते] तत्र पश्यन्ति नैवासिकाकाराणि नैवासिकलिंगानि नैवासिकनिमित्तानि। तद्यथा विहारं सिक्तं संमृष्टं सुकुमारीं गोमयकार्षीमनुप्रदत्ताम्। शयनासनप्रज्ञप्तिं कृताम्। तैलप्रद्योतानादीपितान्। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतका नश्यन्तु अन्यत्र एव भवन्तु पृथक् भवन्तु दूरेणापरेण भवन्तु। ते भेदार्थिनो भेदपरिष्कारा ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षव आपद्यंते स्थूलात्ययान्। ते भेदसामन्तकाः।

यथापि तत्तदेव पोषधे पञ्चदश्यां ते आगन्तुका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्ति नैवासिकाकाराणि [नैवासि]कलिंगानि नैवासिकनिमित्तानि। तद्यथा विहारं सिक्तं संमृष्टं सुकुमारीं

गोमयकार्षीमनुप्रदत्ताम्। शयनासनप्रज्ञप्तिं कृताम्। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतका भिक्षवो न कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम्। तेऽधर्मसंज्ञिनो व्यग्रसंज्ञिनो ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवः सातिसारा भवन्ति। व्यग्रसामन्तकाः।

यथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्ति नैवासिकाकाराणि नैवासिकलिङ्गानि नैवासिकनिमित्तानि। तद्यथा विहारं सिक्तं संमृष्टं सुकुमारीं गोमयकार्षीमनुप्रदत्ताम्। शयनासनप्रज्ञप्तिं कृताम्। तैलप्रद्योतानादीपितान्। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतका इति। येऽनागतका इति न कल्पयन्त्यस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम्। ते कल्पार्थिनः कल्पपरिष्कारा यावत्तावन्मार्गित्वा ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवः सातिसाराः। कल्पसामन्तकाः।

यथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णाः सन्निपतिताः। चत्वारो वा उत्तरे वा। ते तत्र पश्यन्ति

नैवासिकाकराणि नैवासिकलिङ्गानि नैवासिकनिमित्तानि । तद्यथा विहारं सिक्तं संमृष्टं सुकुमारीं गोमयकार्षीमनुप्रदत्ताम् । शयनासनप्रज्ञप्तिं कृत्वा तैलप्रद्योताना[दी]पितान् । तेषामेवं भवति । सन्ति भिक्षवो येऽनागतका इति । येऽनागतका न कल्पतेऽस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम् । तानध्याशयनं मार्गन्ति । ते तानध्याशयनं मार्गित्वा न लभन्ते। ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। ततः पश्चान्नैवासिका भिक्षव आगच्छन्त्यल्पतरकाः । तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः । प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः । पूर्वका भिक्षवो न सातिसाराः ।

यथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः । चत्वारो वा उत्तरे वा। ते तत्र पश्यन्ति नैवासिकाकाराणि [नैवासिकलिङ्गानि] नैवासिकनिमित्तानि । तद्यथा विहारं सिक्तं संमृष्टं सुकुमारीं गोमयकार्षीमनुप्रदत्ताम् । शयनासनप्रज्ञप्तिं कृत्वा तैलप्रद्योतानादीपितान् । तेषामेवं भवति । सन्ति भिक्षवो येऽनागतका इति । येऽनागतका इति न कल्पतेऽस्माकं तैर्विना ज्ञप्तिं कृत्वा पोषधं कर्तुं प्रातिमोक्षसूत्रोद्देशमुद्देष्टुम् । ते तानध्याशयनं मार्गन्ति । ते तानध्याशयनं मार्गित्वा लभन्ते । तैः सार्धं निषद्य ज्ञप्तिं कृत्वा पोषधः कर्तव्यः । प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः । पूर्वका भिक्षवो न सातिसाराः ।

यथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णा भवन्ति सन्निपतिताः । [1]चत्वारो वा उत्तरे वा । तत्र

1 Ms. लभन्ति throughout.

गृह्णन्ति नैवासिकाकाराणि नैवासिकलिङ्गानि नैवासिकनिमित्तानि। [तद्यथा] यष्टिशब्दं पदशब्दमुत्कासनशब्दं भाण्डकशब्दं कुण्डिकाशब्दं नैवासिकानां भिक्षूणां स्वरगुप्तमि। तेषामेवं भवति। सन्ति भिक्षवो येऽनागतकाः। येऽनागतका अन्यत्रैव[1] भवन्तु बहिर्गच्छन्तु दूरेणापरेण। [ते] भेदार्थिनो भेदपरिष्कारा ज्ञप्तिं कृत्वा पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। [ततः पश्चा]न्नैवासिका भिक्षवः आगच्छन्ति बहुतरकाः। तैः पुनरपि ज्ञप्तिं कृत्वा पोषधः कर्तव्यः। प्रातिमोक्षसूत्रोद्देश उद्देष्टव्यः। पूर्वका भिक्षवः सातिसाराः।

तथापि तत्तदेव पोषधे पञ्चदश्यामागन्तुका भिक्षवः सन्निषण्णा भविन्त सन्निपतिताः। चत्वारो वा उत्तरे वा। तत्र गृह्णन्ति नैवासिकानां पूर्ववद् यावत्ते तानध्याशयनं मार्गन्ति। अध्याशयनं मार्गित्वा लभन्ते। ते तैः सार्धं निषद्य पोषधं कुर्वन्ति। प्रातिमोक्षसूत्रोद्देशमुद्दिशन्ति। पूर्वका भिक्षवो न सातिसाराः।

यथागन्तुकः सन्निषण्णैः सन्निपतितैर्नैवासिका आगच्छन्त्यल्पा एवं समका बहुतरकाः।

अन्तरोद्दानम्[2]।

भेदविमतिव्यग्राः कल्पानलभंस्ते लभन्ते।

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं यत्र भिक्षवो भवन्ति परिशुद्धाः समानदृष्टयः। न

1 Ms. अह एव

2 Tib. 220a, l. 5.

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं यत्र भिक्षवो भवन्ति कलहकारका भण्डनकारका विवादकारका विग्रहकारका आधिकरणिकाः[1] ।

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं [सभिक्षुकमनावासं] यत्र भिक्षवो भवन्ति परिशुद्धाः समानदृष्टयः । न गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं सभिक्षुकमनावासं यत्र भिक्षवो भवन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकाः ।[1]

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं सभिक्षुकमनावासं सभिक्षुकमावासम[ना]वासं यत्र भिक्षवो भवन्ति परिशुद्धाः समानदृष्टयः । न गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासात्सभिक्षुकमावासं सभिक्षुकमनावासं सभिक्षुकमावासमनावासं स्थापयित्वा आपदासु वा सर्वसंघेन[2] वा ।

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासादभिक्षुकमावासं सभिक्षुकमनावासं सभिक्षुकमावासमनावासं यत्र गत्वा स्पर्शो[3] भवति कायेन वा चित्तेन वा । न गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासादभिक्षुकमावासं सभिक्षुक-

1 Tib. adds स्थापयित्वा आपदासु सर्वसंघेन वा ।

2 Cf. *Mahāvagga*, ii. 35: अञ्ञत्र संघेन अञ्ञत्र अन्तरायाय ।

3 Tib. 220b, l. 6: ལུས་སམ་སེམས་རེག་པར་འགྱུར་བ །

मनावासं सभिक्षुकमावासमनावासं स्थापयित्वा आपदासु सर्व-संघेन वा ।

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासाद-भिक्षुकमावासमनावासमभिक्षुकमावा[समभिक्षुकम]नावासं यत्र गत्वा स्पर्शो भवति कायेन वा चित्तेन वा। न गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासादभिक्षुकमावासमभिक्षुकम-नावासमभिक्षुकमावासानावासं स्थापयित्वा आपदासु वा सर्वसंघेन वा ।

गन्तव्यं भिक्षुणा तदेव पोषधे पञ्चदश्यां सभिक्षुकादावासाद-नावासादभिक्षुकमावासमभिक्षुकमावासमनावासं यत्र गत्वा स्पर्शो भवति [कायेन वा चित्तेन वा ।[1]... ]

1 About four or five leaves containing the end of पोषधवस्तु and the beginning of प्रवारणावस्तु are missing.

....[1]आरामद्वारमागत्य गां हत्वा महिषीं छागलिकां वा रुधिराङ्कानि रुधिरविलेखकानि कृत्वा भिक्षूणां दूतमनुप्रेषयन्ति। निर्गच्छन्त्वार्याः। वयमत्र वत्स्यामः। अहं चेत्त्रिवाचिकया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायः ब्रह्मचर्यान्तरायः यत्त्वहमेकवाचिकया प्रवारणया प्रवारयेयम्। स एकवाचिकया प्रवारणया प्रवारयति। अस्मिन्नर्थे एकवाचिका प्रवारणा।

अ[पर]स्मिन्नर्थे एकवाचिका प्रवारणा। यथापि तत्तदेव पञ्चदश्यां प्रवारणायामन्यतमेन महल्लेन बालेन मूढेनाव्यक्तेनाकुशलेन गोचरे वा गोचरमार्गे वा कुलस्त्री वा कुलकुमारी वा आक्रुष्टा भवत्याभाष्टाः[2] परामृष्टा वा। मनुष्या प्रकुप्य आरामद्वारमागत्य यथागृहीतकमुद्घोषयन्ति। गृह्णन्तु भवन्तः श्रमणान् शाक्यपुत्रीयान् हनन्तु बध्नन्तु प्रवासयन्तु। राज्ञो हस्त्यारोहा भविष्यन्त्यश्वारोहा इष्टकारोहा[3] ध्वजारोहा पताकारोहाः पृथग्राजकृत्यानि राजकरणीयानि करिष्यन्ति। तत्र प्रवारकस्य भिक्षोरेवं भवति। अद्य संघस्य प्रवारणा पांचदशिका अन्यतमेन च महल्लकेन मूढेनाव्यक्तेनाकुशलेन गोचरे वा गोचरमार्गे वा कुलस्त्री वा कुलकुमारी वा आक्रुष्टा भवत्याभाष्टाः परामृष्टा वा। मनुष्याः प्रकुपिता आरामद्वारमागत्य यथागृहीतकं[4] घोषयन्ति। गृह्णन्तु भवन्तः श्रमणान् शाक्यपुत्रीयान् हनन्तु बध्नन्तु। राज्ञो हस्त्यारोहा

1 The first two leaves of the प्रवारणावस्तु are missing.

2 Tid. 230a, l. 3: ཁ་ངན་སྨྲས་སམ།

3 Ibid. སོ་ཕོག་སྐྱེད་པ་དང་། 4 Ms. ग्रहीतिकां

अश्वारोहा इष्टकारोहा ध्वजारोहा पताकारोहाः पृथग्राजकृत्यानि राजकरणीयानि करिष्यन्ति। अहं चेत्त्रिवाचिकया प्रवारणया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमेकवाचिक[या] प्रवारणया प्रवारयेयम्। स एकवाचिकया प्रवारणया प्रवारयति। अस्मिन्नर्थे एकवाचिका प्रवारणा।

अपरस्मिन्नर्थे एकवाचिका प्रवारणा। यथापि तद्विहारः अमनुष्याध्युषिते प्रदेशे प्रतिष्ठापितो भवति। अन्यतमेन च महल्लकेन बालेन मूढेनाव्यक्तेनाकुशलेनाप्रतिरूपे प्रदेशे उच्चारप्रस्रावं क्षेटं शिंघानकं वान्तं विरिक्तं छोरितमशुचिप्रसिक्तं[1] वा शयनासनं प्रविक्षिप्तम्[2]। अमनुष्याः प्रकुपिता गोचरेऽवतिष्ठन्ति गोचरमार्गेऽपि चंक्रमे मेडयां[3] द्वारकोष्ठकेऽपि भिक्षूनध्याविशन्ति। तत्र प्रवारकस्य भिक्षोरेवं भवति। अद्य सङ्घस्य प्रवारणा पांचदशिका। अयं च विहारो व्याडाध्युषिते प्रदेशे प्रतिष्ठापितः। अन्यतमेन च बालेन मूढेनाव्यक्तेनाकुशलेनाप्रतिरूपे प्रदेशे उच्चारप्रस्रावं क्षेटं शिंघानकं वान्तं विरिक्तं छोरितमशुचिप्रसिक्तं वा शयनासनं प्रविक्षिप्तम्। व्याडाः प्रकुपिता गोचरेऽपि तिष्ठन्ति गोचरमार्गेऽपि चङ्क्रमेऽपि मेडग्रां द्वारकोष्ठकेऽपि भिक्षूनध्याविशन्ति। अहं चेत्त्रिवाचिकया प्रवारणया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमेकवाचिकया

1 Ms. प्रच्चितं ; Tib. སྦགས་ ।     2 Ms. प्रविशक्क ; Tib. བཞག་པ་ ।

3 Tib, 230b, l. 3: ཁྱམས་དང་ ।

प्रवारणया प्रवारयेयम्। स एकवाचिकया प्रवारणया प्रवारयति। अस्मिन्नर्थे एकवाचिका प्रवारणा।

अपरस्मिन्नर्थे एकवाचिका प्रवारणा। यथापि तद्विहारो नागाध्युषिते प्रदेशे प्रतिष्ठापितो भवति। अन्यतमेन च महल्लेन बालेन मूढेनाव्यक्तेनाकुशलेनाप्रतिरूपे प्रदेशे वा गोचरे वा गोचरमार्गे वा उच्चारप्रस्रावं क्षेटं शिङ्घानकं वान्तं विरिक्तं छोरितमशुचिप्रसिक्तं वा शयनासनं प्रविक्षिप्तम्[1]। नागाः प्रकुपिता गोचरेऽपि तिष्ठन्ति गोचरमार्गेऽपि चङ्क्रमेऽपि मेड्यां[2] द्वारकोष्ठकेऽपि भिक्षूनध्याविशन्ति[3]। तत्र प्रवारकस्य भिक्षोरेवं भवति। अद्य संघस्य प्रवारणा पांचदशिका। अयं च विहारो नागाध्युषिते प्रदेशे प्रतिष्ठापितः। अन्यतमेन च महल्लेन बालेन मूढेनाव्यक्तेनाकुशलेनाप्रतिरूपे प्रदेशे उच्चारप्रस्रावं क्षेटं शिङ्घानकं वान्तं विरिक्तं छोरितमशुचिप्रसिक्तं वा शयनासनं प्रविक्षिप्तम्। नागाः प्रकुपिता गोचरेऽपि तिष्ठन्ति गोचरमार्गेऽपि चंक्रमेऽपि मेड्यां द्वारकोष्ठकेऽपि भिक्षूनध्याविशन्ति। पल्यङ्कानपि[4] संपरिवर्तयन्ति। अहं चेत्त्रिवाचिकया प्रवारणया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमेकवाचिकया प्रवारणया प्रवारयेयम्। स एकवाचिकया प्रवारणया प्रवारयति। अस्मिन्नर्थे एकवाचिका प्रवारणा।

अपरस्मिन्नर्थे एकवाचिका प्रवारणा। यथापि तद्विहारो दावमध्ये

1 Tib. 231b, l. 2: གནས་མལ་བཞག་པས། 2 Ibid. ཁྱམས་སམ།
3 Ibid. འབབ་པར་བྱེད་། 4 Tib. 231b, l. 5: ཞལ་ཁྲི་དག་ཀྱང་།

प्रतिष्ठापितो भवति। अग्निर्मुक्तः[1] इत्यग्निर्ग्रामनिगमराजराष्ट्रधानीं दहन् परैति। गोचरमपि दहति गोचरमार्गमपि चङ्क्रमं मेडीं द्वारकोष्ठकं विहारमपि दहति विहारसामन्तकमपि। तत्र प्रवारकस्य भिक्षोरेवं भवति। अद्य सङ्घस्य प्रवारणा पांचदशिका। अयं च विहारो दावमध्ये प्रतिष्ठापितः। अग्निर्मुक्तः इत्यग्निर्ग्रामनिगमराजराष्ट्रधानीं दहन् परैति। गोचरमपि गोचरमार्गमपि चङ्क्रमं मेडीं द्वारकोष्ठकं विहारमपि दहति विहारसामन्तकमपि। अहं चेत्त्रिवाचिकया प्रवारणया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमेकवाचिकया प्रवारणया प्रवारयेयम्। स एकवाचिकया प्रवारणया प्रवारयति। अस्मिन्नर्थे एकवाचिका प्रवारणा।

अपरस्मिन्नर्थे एकवाचिका प्रवारणा। यथापि तद्विहारः अनूपमध्ये[2] प्रतिष्ठापितो भवति। उपरि पर्वतसंक्षेपे स्थूलबिन्दुको देवो वर्षन् ग्रामनिगमराजराष्ट्रधानीं वहन् परैति। गोचरमपि वहति गोचरमार्गमपि चङ्क्रमं मेडीं द्वारकोष्ठकं विहारमपि संस्यन्दयति। तत्र प्रवारकस्य भिक्षोरेवं भवति। अद्य संघस्य प्रवारणा पांचदशिका। अयं विहारोऽनूपमध्ये प्रतिष्ठापितः। उपरि पर्वतसंक्षेपे स्थूलबिन्दुको देवो वर्षन् ग्रामनिगमराजराष्ट्रधानीं वहन् परैति। गोचरमपि गोचरमार्गमपि चंक्रमं मेडीं द्वारकोष्ठकं विहारमपि संस्यन्दयति। अहं चेत्त्रिवाचिकया प्रवारणया प्रवारयेयं स्यान्मे अतो निदानं जीवितान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वह-

1 Tib. 231b, l. 7: མེ་ཕོར་བས། 2 Tib. 232b, l. 7: གཞོང་ཞིག།

मेकवाचिकया प्रवारणया प्रवारयेयम् । स एकवाचिकया प्रवारणया प्रवारयति । अस्मिन्नर्थे एकवाचिका प्रवारणा ।

कस्मिन्नर्थे द्विवाचिका प्रवारणा । यत्तु तृतीयायां वाच्यवकाशो न भवति । अस्मिन्नर्थे द्विवाचिका प्रवारणा ।

कस्मिन्नर्थे त्रिवाचिका प्रवारणा । समावस्थायाः ।

कस्मिन्नर्थे गणप्रवारणा । यथापि तद्भयं भवति । अटवी संक्षोभचक्रसमारूढा । जनपदास्तेन ते त्वाहिण्डन्ति[1] । तत्तु भिक्षुणेति सचीवरं कण्ठे बद्ध्वा[2] समवलोक्य अन्योन्यं प्रक्रमितव्यम् । अद्यायुष्मन्तः संघस्य प्रवारणा पांचदशिका । यदा संघसामग्रीं लप्स्यामस्तदा प्रवारयिष्यामः । अस्मिन्नर्थे गणप्रवारणा ।

यथा भदन्त भिक्षव इदमेवंरूपं क्रियाकारं कृत्वा वर्षा उपगच्छन्ति । यस्यास्माकमायुष्मतोऽन्तर्वर्षे ज्ञातिरागच्छेद् दातव्या प्रवारणा । देया भदन्त प्रवारणा न देया । देया उपालिन्[3] । स चेद्वस्तुं स्थापयेन्न पुद्गलम् । देया प्रवारणा न देया । नोपालिन् । स इदं स्याद्वचनीयः । न वयमायुष्मन् इत्यर्थं सन्निषण्णाः सन्निपतिताः । कश्चिदायुष्मन् वस्तुं स्थापयेन्न पुद्गलमपि त्वात्मविशुद्ध्यर्थं प्रवारणा उक्ता भगवता । सचेदाकांक्षसि प्रवारय । सचेत्पुद्गलं स्थापयति न वस्तुम् । देया प्रवारणा न देया । नोपालिन् । स इदं स्याद्वचनीयः । न वयमायुष्मन्नित्यर्थं सन्निषण्णाः सन्निपतिताः । कश्चिदायुष्मन् वस्तुं स्थापयेत् पुद्गलमपि त्वात्मविशुद्ध्यर्थं

1 Tib. 232b, l. 7: ཁྲོས་སོ །

2 Ibid. གདར་བུ་དག་ཆོས་གོས་རྣམས་དམ་པོ་བྱས །

3 Ms. उपाल्यं throughout.

प्रवारणा उक्ता भगवता। सचेदाकाङ्क्षसि प्रवारय। सचेद्वस्तुं स्थापयति पुद्गलं च। देया प्रवारणा न देया। नोपालिन्नेतानाकारान् स्थापयित्वा।

उद्दानम्। भिक्षुं राजा गृह्णाति स्मरेच्च दशकाभिश्च।
आपत्तिं सत्तिकां कुर्याच्चोदनामिव सत्तिकाम्॥

यथापि तत्तदेव प्रवारणायां पंचदश्यां भिक्षू राज्ञा गृहीतो भवति चौरैर्वा धूर्तैर्वा बधकैः प्रत्यर्थिभिः प्रत्यमित्रैः। तस्य भिक्षुभिर्दूतोऽनुप्रेषयितव्यः। मुञ्चैनं भिक्षुं सब्रह्मचारी एषोऽस्माकम्। स चेन्मुञ्चतीत्येवं कुशलं नोचेन्मुञ्चति द्वितीयो दूतोऽनुप्रेषयितव्यः। मुञ्चतैनं भिक्षुम्। अस्त्यस्माकमनेन सार्धं किंचिदेव करणीयम्। सचेन्मुंचतीत्येवं कुशलं नोचेन्मुंचति भिक्षुभिर्मण्डलकं गत्वा प्रवारयितव्यम्। ततः पश्चाद् द्वितीये दिवसे तस्य भिक्षोर्मोक्षाय युञ्जितव्यम्। सचेद्युञ्जन्तीत्येवं कुशलं नोचेद्युञ्जन्ति सातिसारा भवन्ति।

यथापि तत्तदेव प्रवारणायां पञ्चदश्यां भिक्षोरापत्तिस्मरणिकेन भिक्षुणा सापत्तिभिक्षोः पुरस्ताद्यथाधर्मं प्रतिकर्तव्यम्। ततः पश्चात्प्रवारयितव्यम्। एवं हि प्रवारयितव्यं न त्वेवाहं प्रवारणायामन्तरायं वदामि। पूर्ववद्यावद्यथा पोषधवस्तुन्येवं विस्तरेण दशिका कर्तव्या।

यथापि तत्तदेव प्रवारणायां पञ्चदश्यां भिक्षुरापत्तिं प्रतिजानाति। सचेत्पाराजिकां प्रतिजानाति नाशयित्वा प्रवारयितव्यम्। सचेत्संघावशेषं प्रतिजानाति अधिष्ठाय प्रवारयितव्यम्।

सचेत्पायन्तिकां प्रतिदेशनीयां दुष्ठुलां[1] प्रतिजानाति। देशयित्वा प्रवारयितव्यम्।

यथापि तत्तदेव प्रवारणायां पंचदश्यां वस्त्वविदितं भवति। केचिन्निरवशेषसंज्ञिनः[2]। ये निरवशेषसंज्ञिनस्तैर्नाशयित्वा प्रवारयितव्यम्। ये सावशेषसंज्ञिनस्तैरधिष्ठाय प्रवारयितव्यम्।

यथापि तत्तदेव प्रवारणायां पञ्चदश्यामापत्तिरविनिश्चिता भवति। तत्तु केचिद्देशनकरणीयमित्याहुः। केचित्संवरणीयमित्याहुः। तत्र ये देशनकरणीयमित्याहुस्तैर्देशयित्वा प्रवारयितव्यम्। ये संवरणीयमित्याहुस्तैः संवरणं कृत्वा प्रवारयितव्यम्।

यथापि तत्तदेव प्रवारणायां पंचदश्यां भिक्षुभिर्भिक्षुश्चोदयितव्यः। स चेच्चोदको न कायेन संवृतो भवति न वाचा। एवंरूपं चोदकमामर्षयित्वा[3] प्रमर्षयित्वा[4] प्रवारयितव्यम्। स चेच्चोदकः कायेन संवृतो भवति न वाचा। एवंरूपमपि चोदकमामर्षयित्वा प्रमर्षयित्वा प्रवारयितव्यम्। स चेच्चोदकः कायेन संवृतो भवति वाचा च। एवंरूपमपि चोदकमामर्षयित्वा प्रवारयितव्यम्।

सचेच्चोदकः कायेन संवृतो वा वाचा [च] न सूत्रधरो न विनयधरो न मातृकाधरः। एवंरूपं चोदकमाज्ञापयित्वा[5] संज्ञापयित्वा प्रवारयितव्यम्। सचेच्चोदकः कायेन संवृतो वाचा च सूत्रधरो विनयधरो मातृकाधरो न सूत्रव्यक्तो न विनयव्यक्तो न मातृका-

1 Ms. दुष्टतां  2 Tib. 233b, l. 6: ལྷག་མ་མེད་པར་འདུ་ཤེས་པ །

3 Tib. 234a, l. 2: བསྙལ་ཞིང །=to rub  4 Ms. प्रमर्दयित्वा

5 Tib. 234a, l. 4: བརྡ་སྤྲད་ཅིང །

व्यक्तो न सूत्रकोविदो न विनयकोविदो न मातृकाकोविदः। एवंरूपमपि चोदकमाज्ञापयित्वा संज्ञापयित्वा प्रवारयितव्यम्। स चेच्चोदकः कायेन संवृतो वाचा [च] सूत्रधरो विनयधरो मातृकाधरः सूत्रव्यक्तो विनयव्यक्तो मातृकाव्यक्तः सूत्रकोविदो विनयकोविदो मातृकाकोविदो न सूत्रकुशलो न विनयकुशलो न मातृकाकुशलः। एवंरूपमपि चोदकमाज्ञापयित्वा संज्ञापयित्वा प्रवारयितव्यम्।

सचेच्चोदकः कायेन संवृतो भवति वाचा [च] सूत्रधरो विनयधरो मातृकाधरः सूत्रव्यक्तो विनयव्यक्तो मातृकाव्यक्तः सूत्रकोविदो विनयकोविदो मातृकाकोविदः सूत्रकुशलो विनयकुशलो मातृकाकुशलः। किंतु संचिन्त्य संघमध्ये अधर्मं धर्मतो दीपयति धर्मं चाधर्मतः। अविनयं विनयतो विनयं चाविनयतः। एवंरूपमपि चोदकमाज्ञापयित्वा संज्ञापयित्वा प्रवारयितव्यम्।

सचेच्चोदकः कायेन संवृतो भवति यावत्सचेन्न संचिन्त्य संघमध्ये अधर्मं धर्मतो दीपयति धर्मं चाधर्मतः। अविनयं विनयतो [दीपयति] विनयं चाविनयतः। एवंरूपमपि चोदकमाज्ञापयित्वा संज्ञापयित्वा प्रवारयितव्यम्।

सचेच्चोदकः कायेन संवृतो भवति वाचा [च] सूत्रधरो विनयधरो मातृकाधरः सूत्रव्यक्तो विनयव्यक्तो मातृकाव्यक्तः सूत्रकोविदो विनयकोविदो मातृकाकोविदः सूत्रकुशलो विनयकुशलो मातृकाकुशलः। न संचिन्त्य संघमध्ये अधर्मं धर्मतो दीपयति धर्मं चाधर्मतः। अविनयं विनयतो दीपयति विनयं चाविनयतः। स इदं स्याद्वचनीयः। यदायुष्मन् चोदकेन वदसि पाराजिकया संघा-

वशेषया प्रतिदेशनि[कया] दुष्ठुलया रात्रिकृतेन दिवसकृतेन पथ[1]-कृतेनोत्पथकृतेन गच्छतस्तिष्ठतो निषण्णस्यानिषण्णस्य[2]। सचेत्-पाराजिकया न संघावशेषया न पायन्तिकया न प्रतिदेशनिकया न दुष्ठुलया। स चेत्संघावशेषया न पाराजिकया न पायन्तिकया न प्रतिदेशनिकया न दुष्ठुलया। स चेत्पायन्तिकया न पारा-जिकया न संघावशेषया न प्रतिदेशनिकया न दुष्ठुलया। स चेत्प्रतिदेशनिकया न पाराजिकया न संघावशेषया न पायन्तिकया न दुष्ठुलया। स चेद् दुष्ठुलया न पाराजिकया न संघावशेषया न पायन्तिकया न प्रतिदेशनिकया।

सचेत्प्रथमया पाराजिकया न द्वितीयया न तृतीयया न चतुर्थिकया। सचेद् द्वितीयया न प्रथमया न तृतीयया न चतुर्थिकया। सचेत तृतीयया न प्रथमया न द्वितीयया न चतुर्थिकया। सचेत् चतुर्थिकया न प्रथमया न द्वितीयया न तृतीयया। सचेत् प्रथमया संघावशेषया न द्वितीयया न यावत्त्रयो-दश पदः। सचेद् यावत् त्रयोदशमिकया[न] प्रथमया[न] द्वितीयया न तृतीयया यावन्न द्वादशमिकया। सचेत्प्रथमया पायन्तिकया न द्वितीयया [न यावन्न]वतिमया। सचेन्नवतिमया न प्रथमया न द्वितीयया यावन्नैकनवतिमया। सचेत् प्रथमया प्रतिदेशनीया न द्वितीयया न तृतीयया न चतुर्थिकया। सचेद् द्वितीयया न प्रथमया न तृतीयया न चतुर्थिकया। सचेत् तृतीयया न प्रथमया न द्वितीयया न चतुर्थिकया। [सचेत् चतुर्थिकया] न प्रथमया न

1 Tib. 234b, l. 6: ལམ་དུ་བྱས་པ། 2 Ibid. ཉལ་བའི་འམ །=शयानस्य वा

द्वितीयया न तृतीयया। सचेत्प्रथमया दुष्ठुलया न द्वितीयया न तृतीयया न यावन्नवतिमया। सचेदन्तिमया न प्रथमया न द्वितीयया यावदन्तिमया।

सचेद् रात्रिकृतेन [न] दिवसकृतेन। सचेद् दिवसकृतेन न रात्रिकृतेन। सचेदुत्पथकृतेन न पथकृतेन। सचेत्पथकृतेन नोत्पथकृतेन। सचेद् गच्छतो न तिष्ठतो न निषण्णस्य नानिषण्णस्य। सचेत् तिष्ठतो न गच्छतो न निषण्णस्य नानिषण्णस्य। सचेत् निषण्णस्य न गच्छतो [न तिष्ठतो ना]निषण्णस्य। सचेदनिषण्णस्य न गच्छतो न तिष्ठतो न निषण्णस्य।

सचेच्चोदकः एवं साधु च सुष्ठु च समेन युज्यमानः समनुशास्यमानः समनुगाह्यमानः स्थानात्स्थानं संक्रामति अचोदकः स्यात् अचोदितः स्यात्। सचेच्चोदकः स्थानात्स्थानं न संक्रामति चोदकः स्यात्। सचेच्चोदकः स्थानात्स्थानं न संक्रामति चोदित इदं स्याद्वचनीयः। यदायुष्मन् तस्मिन् समये कायसंस्कारः वाक्संस्कारः मनःसंस्कारः। सचेत् पाराजिकां प्रतिजानाति नाशयित्वा प्रवारयितव्यम्। सचेत् संघावशेषां प्रतिजानाति अधिष्ठाय प्रवारयितव्यम्। सचेत् पा[त]यन्तिकां प्रतिदेशनीयां दुष्ठुलां प्रतिजानाति देशयित्वा प्रवारयितव्यम्।

उद्दानम्। **महदपि [स्थापनं] कर्म नाना पंचिका।**
**गमिकेन स्थानं कुर्यात्परिशुद्धानां प्रवारणा॥**

यथापि तत्तदेव प्रवारणायां पंचदश्यां नैवासिका भिक्षवः संनिषण्णा भवन्ति सन्निपतिताः पञ्च वा उत्तरे वा। तेषामेवं भवति।

सन्ति भिक्षवो येऽनागतका इति । येऽनाग[तकाः कल्पत्य]स्माकं तैर्विना ज्ञप्तिं कृत्वा प्रवारयितुम् । ते कल्पार्थिनः कल्पपरिष्कारा ज्ञप्तिं कृत्वा प्रवारयन्ति । ततः पश्चान्नैवासिका भिक्षवः संनिषण्णाः सन्निपतिता आगच्छन्त्यल्पतरकाः । तैः पुनरपि ज्ञप्तिं कृत्वा प्रवारयितव्यम् । पूर्वका भिक्षवः सातिसाराः । कल्पसामन्तकाः । पूर्ववद् यावद् यथा पोषधवस्तुन्येवं यथोक्ता उद्दानगाथा वाच्यम् । एकस्तु विशेषस्तत्र नैवासिका भिक्षवः सन्निषण्णाः संनिपतिताश्चत्वारो वा उत्तरे वा दृष्ट्वापि वाच्यं पञ्च वा उत्तरे वेति ।

उद्दानम् । वर्षोपगतकान् भिक्षून् ज्ञात्वा कलहकारकान् ।
साखिल्यकेन प्रत्युद्गम्य नियतं चातुर्मासिके ।
ग्लानकश्च वस्तु च वर्गो भवति समुद्यतः ॥

आयुष्मान् उपालो बुद्धं भगवन्तं पृच्छति । यथापि तद् भदन्त वर्षोपगता भिक्षवः शृण्वन्ति भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकाः । तेऽस्माकं चोदयिष्यन्ति स्मारयिष्यन्ति । अलज्जितायो वैतरिकत्वेन । तैस्तेषां कथं प्रतिपत्तव्यम् । तैस्तूपालिन् भिक्षुभिर्द्वित्राणि वा पोषधकर्माणि अतिक्रम्य प्रवारयितव्यम् । सचेत्संपद्यते इत्येवं कुशलम् । नोचेत्संपद्यते तैर्भिक्षुभिर्द्वौ त्रयो वा आपदर्थका[1] मण्डलकाः संमन्तव्याः । सचेत्संपद्यते इत्येवं कुशलम् । नोचेत्संघते वाक्साखिल्यकेन[2] प्रत्युद्गम्य पात्रचीवरं प्रतिग्रहीतव्यम् । पात्र-

1 Tib. 236b, l. 1: གནོད་པའི་ཆེད་ཀྱི། 2 Ibid. བཤེས་པའི་ཚིག་གིས།

चीवरेणामोहयित्वा[1] प्रमोहयित्वा प्रवारयितव्यम्। सचेत् संपद्यते इत्येवं कुशलम्। नोचेत्संपद्यते धर्मश्रवणं दातव्यम्। धर्मश्रवणेनामोहयित्वा प्रमोहयित्वा प्रवारयितव्यम्। सचेत्संपद्यते इत्येवं[2] कुशलम्। नोचेत्संपद्यते तैरुपालिन् भिक्षुभिर्मण्डलकं[3] गत्वा[4] पोषधः कर्तव्यः। सचेत्ते एवं वदेयुः। अद्यायुष्मन्तः संघस्य प्रवारणा पाञ्चदशिका। कस्माद् यूयं पोषधं कुरुथेति। ते इदं स्युर्वचनीयाः। आगन्तुका यूयम् आयुष्मन्तो नैवासिका भिक्षवोऽनेनार्थेन। तेषामेवं भवति। नियतमायुष्मतां चातुर्मासिकी प्रवारणा भविष्यतीति। ततः पश्चात्तैर्गतवेगैर्गतप्रत्यर्थिभिः पुनरपि प्रवारयितव्यः।

यथापि तत्तदेव प्रवारणायां पञ्चदश्यां ग्लानः अग्लानस्य प्रवारणां[5] स्थापयति। ग्लानः इदं स्याद्वचनीयः। आगम[य] त्वमायुष्मन् ग्लानस्त्वम् अप्रयोगक्षमः। यथापि तत्तदेव प्रवारणायां पञ्चदश्यामग्लानो ग्लानस्य प्रवारणां स्थापयत्यग्लान इदं स्याद्वचनीयः। आगम[य] त्वमायुष्मन् ग्लानोऽसौ अप्रयोगक्षमः।

यथापि तत्तदेव प्रवारणायां पञ्चदश्यां ग्लानः ग्लानस्य दूतेन प्रवारणां स्थापयति। दूतः इदं स्याद्वचनीयः। आगमय त्वमायुष्मन् ग्लानोऽसौ अप्रयोगक्षमः। यथापि तत्तदेव प्रवारणायां[6].... ।

1 Ibid. མགུ་ཞིང་ ।=आराधयित्वा

2 Ms. इतीवं in many places for इत्येवं ।

3 Tib. 236b, l. 4: དེ་དག་དཀྱིལ་འཁོར་གྱི་ནང་དུ་སོང་ལ ।

4 Ms. कृत्वा ।

5 Ms. प्रवारणां स्थापनं स्थापयति ।

6 Tib. 237a, l. 2: The leaf containing the closing portion of the प्रवारणावस्तु and the beginning of वर्षावस्तु is lost.

....[1]ततः पश्चात् क्रियाकारः आराधयितव्यः। शृणोतु भदन्तः संघः। अस्मिन्नावासेऽयं चायं च क्रियाकारः। यो युष्माक-मुत्सहतेऽनेन चानेन च क्रियाकारेण वर्षामुपगन्तुं स शिलाकां गृह्णातु। न च वः केनचिद् भिक्षुणा [वर्षोपगतो भिक्षुश्चोदयितव्यः स्मारयितव्यः।] यो वः कस्यचित्किं[चिद्] विजानीते स इदानीं वदतु। मा पश्चादन्तवर्षे रणमुत्पादयिष्यथ। यो वः अन्तवर्षे रणमुत्पादयिष्यति तस्य संघे[न] उत्तरे उपपरीक्षितव्यं मंस्यते।

ततः पश्चातं शयनासनग्राहकेण भिक्षुणा शिलाकाश्चार-[यितव्याः। आदौ देशकेन शिलाका ग्रहीतव्याः।] ततः पश्चात् संघस्थविरेणैव। आसनादुत्थाय[2] शिलाकागृह्यैः शनैः स्थापयितव्याः। एवं यावत् संघनवकेन। श्रामणेरानाचार्योपाध्यायैः शिलाका ग्राहयितव्याः। ततः पश्चाद् गणयितव्याः। अस्मिन्नावासे इयद्भिर्भिक्षुभिः [शिलाका गृहीतेति। ततः पश्चात् शयनासनग्रा]हकेण भिक्षुणा ताडवं कुम्बिकां च गृहीत्वा संघस्थविरस्य पुरतः स्थित्वा वक्तव्यम्। स्थविर अमुको विहारः सलाभः सचीवरिकः। गृहाण। स चेद् गृह्णाति यत्संघस्थविरस्य विहारः स द्वितीयस्थविराय दातव्यः। [संघ]-स्थविरो न गृह्णाति द्वितीयस्थविराय दातव्यः। द्वितीयस्थविरो न गृह्णाति तृतीयस्थविराय दातव्यः। सचेत् तृतीयस्थविरेण गृहीतो भवति। संघस्थविरो याचेत। प्रथमायां वाचि न

1 Tib. 239a, l. 1.

2 Tib. 239a. l. 4: སྟན་གྱི་སྟེང་ནས་སླུགས་དེ །

दातव्यः। द्वितीयायां वाचि [न दातव्यः। तृतीयायां वाचि दातव्यः। सं]घस्थविरेण विनयाति[सा]रिणी दुष्ठुलापत्ति-र्देशयितव्या[1]। एवं यावत् संघनवकेन गृहीतस्य। सचेत्संघ-तृतीयनवको याचते प्रथमायां वाचि न दातव्यः। द्वितीयायां न दातव्यः। तृतीयायां दातव्यः। [संघतृतीयनवकेन विनयाति-सारिणी दु]ष्ठुलापत्तिर्देशयितव्या।

भिक्षवः सर्वान् विहारानुद्दिशन्ति। आगन्तुका भिक्षवो विहन्यन्ते। भगवानाह। आगन्तुकानां भिक्षूणामर्थायानुद्दिष्टं वस्तु[2] धारयितव्यम्। भिक्षवो द्वारकोष्ठकेऽप्युद्दिशन्ति। [भग-वानाह। न द्वारकोष्ठके उद्देष्टव्यम्। भिक्षवोऽङ्गने उद्दिशन्ति। भगवानाह। नाङ्गने उद्देष्टव्यम्। भिक्षवः प्रासादे उद्दिशन्ति।] भगवानाह। प्रासादे नोद्देष्टव्यमिति। निरावासेषु प्रासादेषु काकचटकपारावता वासं कुर्वन्ति। भगवानाह। वारिको[3] भिक्षुरुद्देष्टव्यः। तेन प्रत्यवेक्षितव्यम्। सचेद् अण्डानि[4] अनति-रिक्तानि भवन्ति। [अनतिरिक्तं निष्काष]यितव्यानि। [लैम्बुक-लैला]टा वासं कुर्वन्ति। भगवानाह। प्रत्यवेक्षितव्यम्। अण्डान्य-नतिरिक्तानि भवन्ति। शातयितव्यानि[5]। अहो चेदतिरिक्तानि

1 Ms. दुष्कृतामपदमापयितव्यः; Tib. 239b, l. 2: འདུལ་བ་དང་ འགལ་བའི་ཉེས་བྱས་ཀྱི་ལྟུང་བ་བཤགས་པར་བྱའོ།

2 Ms. वस्त्रं; Tib. གནས་ཅིག །

3 Tib. 239b, l. 6: སྐྱོད་པའི་དགེ་སློང་དག །

4 Tib. 239b, l. 5: སྒོང་དག །

5 Tib. 239b, l. 7: བསྐྲད་པར་བྱའ །

सूलकं बन्धितव्यं वृद्धिं न गमिष्यन्तीति। ततः पश्चात् शयनासनं दातव्यम्। यदि तावदल्पानि वस्तूनि भवन्ति एवम् [एकमेकं दातव्यं बहूनि भवन्ति द्वयं द्वयं वा] त्रयं त्रयं दातव्यम्। अपराणि महान्ति वस्तूनि भवन्ति। वृद्धवृद्धा भिक्षवः क्लाम्यन्ते परिकर्ममाणाः। भगवानाह। तान् निष्ठितानि[1] दातव्यानि।

ततः पश्चात् शयनासनग्राहकेण भिक्षुणा क्रियाकार आरोचयितव्यः। न केनचिद् भिक्षुणा शयनासनं [विना प्रत्यास्तरणेन परिभुञ्जितव्यम्।] न कल्पप्रत्यास्तरणेन न प्लोतिकेन घनेन वा एकपुटप्लोतिकेन वा द्विपुटेन वा। यावत्सांघिकं शयनासनम्। अपरिभोगेण परिभुञ्जीत तस्य संघ उत्तरे उपपरीक्षितव्यं मंस्यते। शयनासनग्राहकेण भिक्षुणा[न्वर्धमासं शयनासनं या]वद् वृद्धं पश्यत्यपरिभोगेण शयनासनं परिभुञ्जानं संघेनारोचयित्वा आक्षेप्तव्यम्[2]। आहोस्विन्नवकम् आचार्या उपाध्याया आरोचयित्वा आक्षेप्तव्यम्।

ततः पश्चात् दानाग्रमारोचयितव्यम्। अमुकेन गोचरग्रामेण संघेन वर्षा उप[गन्तव्येति आरोचयितव्यम्। ततः पश्चाद् भिक्षुणा गो]चरं वावलोकयित्वा छन्ने प्रविश्य वर्षा उपगन्तव्या। कथमावासोऽवलोकयितव्यः। किन्नु भविष्यन्ति येऽस्मिन् स्थाने विज्ञाः सब्रह्मचारिणो येऽनुत्पन्नं दुःखं दौर्मनस्यं नोत्पादयिष्यन्ति। उत्पन्नं च क्षिप्रमेव प्रतिविनोदयिष्यन्ति [ये सुखं वा सौमनस्यं जनयिष्यन्ति। पुद्गलस्य प्रव्रज्या]यापनं च साधु च सुष्ठु चानु-

1 Tib. 240a. l. 5: དེ་དག་གནས་འཆའ་བ་རྣམས་ལ།

2 Tib. 240a, l. 5: སྤྲ་བར་བྱའོ།

रक्षितव्यं मंस्यन्ते। ग्लानस्य चाग्लानोपस्थायिकः एवमावासोऽवकल्पयितव्यः। कथं गोचरोऽवलोकयितव्यः। [ किन्नु ] अस्मिन्ग्रामोपविचरग्रामे पिण्डकस्य दायकः ग्लानस्याच्छादनं भैषज्यदायकमित्येवं गोचरोऽवलोकयितव्यः।

ततः पश्चाच्छन्ने प्रविश्य भिक्षोर्यथावृद्धिकया समीचीं कृत्वा उत्कुटुकेन स्थित्वाञ्जलिं प्रगृह्य इदं स्याद्वचनीयम्। समन्वाहर त्वमायुष्मन्। अद्य संघवर्षोपस्थान [मासार्धं षोडशम। अहम्] एवंनामामुष्मिन्नावासेऽन्तःसीमे पूर्विकां त्रैमासीं वर्षामुपगच्छामि। अमुकेन वैयावृत्तकरेण अमुकेन गोचरग्रामेण यावदेवास्यावासस्य खण्डच्छुट्या प्रतिसंस्करणार्थमिह में वर्षा [उपगच्छामि। एवं द्वितीयं तृतीयमारोचयितव्यम्।]

भिक्षवो वर्षा उपगन्तव्या न च पुनर्वर्षोषितेन भिक्षुणा बहिःसीमा गन्तव्या। सचेद् गच्छति न तत्र वस्तव्यम्। उक्तं भगवता न हि भिक्षुणा वर्षोषितेन बहिःसीमा गन्तव्या स चेद्गच्छति न तत्र वस्तव्यमिति। [हस्तिपालग्रामे उदयनगृह]पतिः प्रतिवसति। तस्य गृहकलत्रं तु प्रत्युपस्थितम्। आत्मनो वेष्टनम्। तेन तत्र प्रभूतो वस्तुलाभः आमिषलाभश्च समुपानीतः। तेन भिक्षूणां दूतोऽनुप्रेषितः। आगच्छन्तु आर्याः परिभोक्ष्यन्ते इति। भिक्षवः पृच्छितुमारब्धाः किं [ सातिरेकैस्त्रि ]भिर्योजनैः शक्ष्यामो यावदद्यैव गत्वागन्तुं न शक्ष्यामः। ते संलक्षयन्ति। उक्तं भगवता न भिक्षुणा वर्षोपगतेन बहिःसीमा गन्तव्या। स चेद् गच्छति न तत्र वस्तव्यमिति। ते न गताः। तत्र ये भिक्षवो हस्ति-

पालग्रामो[पचारे वर्षोपगतास्तेषां] प्रभूतो वस्तुलाभः आमिषलाभश्चानुप्रदत्तः। ते त्रयाणां वार्षिकाणामत्ययात्कृतचीवरा निष्ठितचीवराः समादाय पात्रचीवरं येन श्रावस्ती तेन चारिकां प्रक्रान्ताः। अनुपूर्वेण चारिकां चरन्तः श्रावस्तीमनुप्राप्ताः। दूरतो दृष्ट्वाभिहिताः। स्वागतं स्वागतमायुष्मन्तः। विश्रामिता उक्ताः। कुतो यूयमायुष्मन्तः एतर्ह्यागच्छथ कुत्र वा स्थ। वर्षा उपगता हस्तिपालग्रामका वयमायुष्मन्त एतर्ह्यागच्छामः। हस्तिपालग्रामके चास्म वर्षा उपगताः। किं यूयमायुष्मन्तो हस्तिपालग्रामके सुखस्पर्शं वर्षा उषिताः न च स्थ क्लान्ताः पिण्डकेन। तत्र वयमायुष्मन्तो हस्तिपालग्रामके सुखस्पर्शं वर्षा उपगताः। न चास्म क्लान्ताः पिण्डकेन। यथाकथमायुष्मन्तो हस्तिपालग्रामके सुखस्पर्शं वर्षा उपगताः। न चास्म क्लान्ताः पिण्डकेन। तत्र हस्तिपालग्रामके उदयनो नाम गृहपतिः प्रतिवसति। तस्य गृहकलत्रं प्रत्युपस्थितम्। आत्मनो वेष्टनम्। तेनास्माकं प्रभूतो वस्तुलाभः आमिषलाभश्चानुप्रदत्तः। एवं वयमायुष्मन्तो हस्तिपालग्रामके सुखस्पर्शं वर्षा उषिताः। न चास्म क्लान्ताः पिण्डकेन। ते कथयन्ति। आयुष्मन्तोऽस्माकमपि तेन गृहपतिना दूतोऽनुप्रेषितः। आगच्छन्त्वार्याः परिभोक्ष्यन्त इति। तैरस्माभिः पृष्टः। कियद्दूरे हस्तिपालग्रामकः। सातिरेकैस्त्रिभिर्योजनैः। तेषामस्माकं बुद्धिरुत्पन्ना। उक्तं भगवता न भिक्षुणा वर्षोपगतेन बहिःसीमा गन्तव्या। सचेद् गच्छति न तत्र वस्तव्यमिति वयं न गताः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवान् संलक्षयति। आकांक्षति कतमः श्रावको

वस्तुलाभमामिषलाभश्च । यत्त्वहं भिक्षूणां सुखस्पर्शविहारार्थं दातॄणां च देयधर्मपरिभोगार्थं सप्ताहमनुजानीयाम् । तस्मादनुजानामि सप्ताहमधिष्ठाय गन्तव्यं करणीयेन ।

उक्तं भगवता सप्ताहमधिष्ठाय गन्तव्यं करणीयेनेति । भिक्षवो न जानते कस्य करणीयम् । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । उपासकस्य करणीयेन उपासिकायाः करणीयेन भिक्षोः करणीयेन भिक्षुण्याः शिक्षमाणायाः श्रामणेरकस्य श्रामणेरिकायाः करणीयेन ।

किमुपासकस्य करणीयेन । यथापि तदुपासकस्य गृहकलत्रं प्रत्युपस्थितं भवति आत्मनो वेष्टनम् । तेन तत्र प्रभूतो वस्तुलाभ आमिषलाभश्च समुपानीतः । स भिक्षूणां दूतमनुप्रेषयति । आगच्छन्त्वार्याः परिभोक्ष्यन्ते । गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन । इदमुपासकस्य करणीयम् । अपरमप्युपासकस्य करणीयम् । यथापि तदुपासकश्चातुर्दिशे भिक्षुसंघे विहारं प्रतिष्ठापयितुकामो भवति । तेन तत्र प्रभूतो वस्तुलाभ आमिषलाभश्च समुपानीतः । स भिक्षूणां दूतमनुप्रेषयति आगच्छन्त्वार्याः परिभोक्ष्यन्ते । गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन । इदमुपासकस्य करणीयम् । अपरमप्युपासकस्य करणीयम् । यथापि तदुपासकः अस्मिन्नेव विहारे शयनासनमनुप्रदातुकामो भवति । तेन तत्र प्रभूतो वस्तुलाभः आमिषलाभश्च समुपानीतो भवति । स भिक्षूणां दूतमनुप्रेषयति । आगच्छन्त्वा[र्याः] परिभोक्ष्यन्ते । गन्तव्यं भिक्षुणा सप्ताह-

मधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्तस्मिन्नेव विहारे ध्रुवभिक्षां प्रज्ञपयितुकामो भवत्यनुकूलयज्ञः[1]। तेन तत्र प्रभूतो वस्तुलाभः आमिषलाभश्च समुपानीतो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्याः परिभोक्ष्यन्ते। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्तस्मिन्नेव विहारे तथागतस्य शरीरस्तूपं प्रतिष्ठापयितुकामो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्या धर्मसहाया भविष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्तस्मिन्नेव स्तूपे यष्ट्यारोपणं छत्रारोपणं ध्वजारोपणं पताकारोपणम्। अलमेकं चन्दनसेकं कुंकुमसेकमनुप्रदातुकामो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्या धर्मसहाया मे भविष्यन्ति। गन्तव्यं भिक्षुणा उपासकस्य करणीयेन सप्ताहमधिष्ठाय। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासककरणीयं चतुर्णां सूत्रनिकायानामन्यतमान्यतमं सूत्रनिकायं विस्तरेणोद्दिष्टं भवति प्रवृत्तञ्च। तेन तत्र प्रभूतो वस्तुलाभ आमिषलाभश्च समुपानीतो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्याः परिभोक्ष्यन्ते। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन।

1 Tib. 242a, l. 6: མཐུན་པའི་མཆོད་སྦྱིན།

इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्य कौकृत्यमुत्पन्नं भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्याः उत्पन्नं कौकृत्यं प्रतिविनोदयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्य पापकं दृष्टिगतमुत्पन्नं भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्या उत्पन्नं पापकं दृष्टिगतं प्रतिनिसृजापयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तत्संघ उपासकस्य संघेन पात्रं निकुब्जयितुकामो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्या धर्मेण पक्षं भजिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासक[स्य] करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्य संघेन पात्रं निकुब्ज[मुत्कुब्जाप]यितुकामो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्याः पात्रं निकुब्जमुत्कुब्जापयिष्यथ। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्। अपरमप्युपासकस्य करणीयम्। यथापि तदुपासकस्य आबाधिको दुःखितो बाढग्लानः। स भिक्षूणां दूतमनुप्रेषयति। आर्या वाचं दास्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय उपासकस्य करणीयेन। इदमुपासकस्य करणीयम्।

किमुपासिकायाः करणीयम्। [एतदेव सर्वमुपासिकायाः करणीयं] स्थापयित्वा गृहकलत्रमात्मनो वेष्टनं च।

किं भिक्षोः करणीयम्। यथापि तद्भिक्षुश्चातुर्दिशे भिक्षुसंघे आरामं निर्यातयितुकामो भवति। तेन तत्र प्रभूतो वस्तुलाभ आमिषलाभश्च समुपानीतो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तः परिभोक्ष्यन्ते। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय भिक्षोः करणीयेन। इदं भिक्षोः करणीयम्। अपरमपि भिक्षोः करणीयम्। यथापि तद्भिक्षुरस्मिन्नेवारामे विहारं शयनासनं ध्रुवभिक्षां तथागतस्य शारीरस्तूपम्। अलमेकं यष्ट्यारोपणं ध्वजारोपणं सूत्रनिकायानामन्यतमान्यतमं सूत्रनिकायं कौकृत्यं पापकं दृष्टिगतमुत्पन्नं भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तः उत्पन्नं पापकं दृष्टिगतं प्रतिनिसृजापयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय भिक्षोः करणीयेन। इदं भिक्षोः करणीयम्। पूर्ववत् सर्वं विस्तरेण वाच्यम्।

अपरमपि भिक्षोः करणीयम्। यथापि तत्संघो भिक्षोरिमान्येवंरूपाणि प्रणिधिकर्माणि कर्तुकामो भवति। तद्यथा तर्जनीयं कर्म निगर्हणीयं प्रवासनीयं प्रतिसंहरणीयम् अदर्शनायोत्क्षेपणीयम् अप्रतिकर्मणयोत्क्षेपणीयम् अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तो धर्मेण पक्षं भजिष्ये। अभिगन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय भिक्षोः करणीयेन। इदं भिक्षोः करणीयम्। अपरमपि भिक्षोः करणीयम्। यथापि तत्संघेन भिक्षोरिमान्येवंरूपाणि प्रणिधिकर्माणि कृतानि भवन्ति। तद्यथा तर्जनीयं कर्म निगर्हणीयं कर्म प्रवासनीयं

प्रतिसंहरणीयम् अदर्शनायोत्क्षेपणीयम् अप्रतिकर्मणयोत्क्षेपणीयम् अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तो वाचं भा[षि]ष्यन्ति उसारयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय भिक्षोः करणीयेन। इदं भिक्षोः करणीयम्। अपरमपि भिक्षोः करणीयम्। यथापि तद्भिक्षुराबाधिको दुःखितो वाढग्लानो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तो वाचं भा[षि]ष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय भिक्षोः करणीयेन। इदं भिक्षोः करणीयम्।

किं भिक्षुण्या करणीयम्। स्थापयित्वा प्रणिधिकर्माणि।

किं शिक्षमाणायाः करणीयम्। एतदेव सर्वं शिक्षमाणायाः करणीयम्। अपरमपि शिक्षमाणायाः करणीयम्। यथापि तत् शिक्षमाणो द्वे वर्षे षट्सु धर्मेषु षट्स्वनुधर्मेषु शिक्षितं भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्या उपसंपादयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय शिक्षमाणायाः करणीयेन। इदं शिक्षमाणायाः करणीयम्।

किं श्रामणेरकस्य करणीयम्। एतदेव सर्वं श्रामणेरकस्य करणीयम्। अपरमपि श्रामणेरकस्य करणीयम्। यथापि तच्छ्रामणेरकः स परिपूर्णविंशतिवर्षो भवति। स भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वायुष्मन्तः उपसम्पादयिष्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय श्रामणेरकस्य करणीयेन। इदं श्रामणेरकस्य करणीयम्।

किं श्रामणेरिकायाः करणीयम्। एतदेव सर्वं श्रामणेरिकायाः करणीयम्। अपरमपि श्रामणेरिकायाः करणीयम्। यथापि तच्छ्रामणेरिका गृहादाप्ता[1] द्वादशवर्षा भवति। कुमारिका कुमावा अष्टादशवर्षा। सा भिक्षूणां दूतमनुप्रेषयति। आगच्छन्त्वार्याः। द्वे वर्षे षट्सु धर्मेषु षट्स्वनुधर्मेषु शिक्षां दास्यन्ति। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय श्रामणेरिकायाः करणीयेन। इदं श्रामणेरिकायाः करणीयम्।

उद्दानम्।
भैषज्यमुपस्थापकः स्त्री पुरुषः पण्डकः।
निमित्तं निधयो ज्ञातयः अन्तरायेण प्रक्रमेत्[2]॥

यथापि तद्वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। न च मेऽस्ति कश्चित्पिण्डकस्य दाता। सोऽहं पिण्डकमलभमानः क्लमेयं कालं वा कुर्याम्। स मे स्यादन्तरायः अप्राप्तस्य प्राप्तये। अनधिगतस्याधिगमाय। असाक्षात्कृतस्य साक्षात्क्रियायै। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। न च मे कश्चिद् ग्लानस्य ग्लानोपस्थापकस्य भैषज्यमलभमानः क्लमेयं वा कालं कुर्याम्। स मे स्यादन्तरायः अप्राप्तस्य प्राप्तये। अनधिगतस्याधिगमाय। असाक्षात्कृतस्य

1 Tib. ཁྱིམ་སོ་བཟུང་བ།

2 Tib. 244b. l. 6:

साक्षात्क्रियायै । यत्त्वहमस्मादावासात्प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्वर्षोपगतस्य भिक्षोः स्त्री उपसंक्रम्य अप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति । [वस आर्य रम आर्य] दुहितरन्ते दास्यामि स्नुषान्ते दासीं ते कर्मकरीं ते दास्यामि । तत्र वर्षोपगतस्य भिक्षोरेवं भवति । अहमस्मिन्नावासे वर्षा उपगतः । इयं च मे स्त्री उपसंक्रम्य अप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति । वस आर्य रम आर्य । अहं ते उपस्थास्यामि दुहितरं ते दास्यामि स्नुषां ते दासीं ते कर्मकरीं ते दास्यामि । अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः । यत्त्वहमस्मादावासात्प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्वर्षोपगतं भिक्षुं पुरुष उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति । वस आर्य रम आर्य । दुहितरं ते दास्यामि स्नुषां ते दासीं ते कर्मकरीं ते दास्यामि । तद् वर्षोपगतस्य भिक्षोरेवं भवति । [अह]मस्मिन्नावासे वर्षा उपगतः । अयं च मे पुरुष उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति । वस आर्य रम आर्य । दुहितरं ते दास्यामि स्नुषां ते दासीं ते कर्मकरीं ते दास्यामि । अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः । यत्त्वहमस्मादावासात्प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्वर्षोपगतं भिक्षुं षण्डक उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति। वस आर्य रम आर्य। अहं ते उपस्थास्यामि दासीं ते कर्मकरीं ते दास्यामि। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। अयं च मे षण्डक उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयति। वस आर्य रम आर्य। अहं ते उपस्थास्यामि। दासीं ते कर्मकरीं ते दास्यामि। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतेन भिक्षुणा अन्यतमान्यतमं शिशुमुदारवर्णं रञ्जनीयं मातृग्रामं दृष्ट्वा अयोनिशो निमित्तमुद्‍गृहीतं भवति। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। मया चान्यतमान्यतमं शिशुमुदारवर्णं रञ्जनीयं मातृग्रामं दृष्ट्वा अयोनिशो निमित्तमुद्‍गृहीतम्। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतस्य भिक्षोर्निधय उपदर्शयन्ति। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। [अहम]स्मिन्नावासे वर्षा उपगतः। इदमेव निधय उपदर्शयन्ति। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः [श्रामण्यान्तरायो] ब्रह्मचर्यान्त-

रायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतं भिक्षुं ज्ञातय उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयन्ति। कस्मात्त्वमार्य मुण्डः पात्रपाणिरनुवेश्मानुवेश्म कुलान्युपसंक्रामसि। इमानि च ते शीतलानि काषायाणि वस्त्राणि कायं परितापयन्ति। एहि त्वमार्य निषद्य कामांश्च परिभुङ्क्ष्व दानानि च देहि पुण्यानि च कुरु। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। इमे चेमे ज्ञातयः उपसंक्रम्याप्रतिरूपया उपनिमन्त्रणया उपनिमन्त्रयन्ति। कस्मात् त्वमार्य मुण्डः पात्रपाणिरनुवेश्मानुवेश्म कुलान्युपसंक्रामसि। इमानि च ते शीतलानि काषायाणि वस्त्राणि कायं परितापयन्ति। एहि त्वमार्य निषद्य कामांश्च परिभुङ्क्ष्व दानानि च देहि पुण्यानि च कुरु। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः [श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः]। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्राजा चतुरङ्गं बलकायं सन्नाह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं यावदाराम[द्वार]मागत्य यथागृहीतकं घोषयति। गृह्णन्तु भवन्तः श्रमणान् शाक्यपुत्रीयान् पूर्ववद्यथा प्रवारणावस्तुन्येवं विस्तरेण वाच्यम्। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। अयं च राजा चतुरङ्गं बलकायं सन्नाह्य पूर्ववद्यावत्सचेदहमस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं

जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः । यत्त्वहमस्मादावासात्प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्वर्षोपगतो भि]क्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतो भवति स राज्ञा उपगृहीतो भवति बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। राजभयेन वा परराष्ट्रं परविषयं निष्पलान उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः स राज्ञा गृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। राजभयेन् वा परराष्ट्रं परविषयं निष्पलान उच्छिद्य कालगतः। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तच्चौरा गृहघातं वा नगरघातं वा जनपदघातं वा कृत्वा आरामद्वारमागत्य गां वा हत्वा महिषीं वा छागलिकां वा रुधिराङ्कानि रुधिरविलेखकानि कृत्वा भिक्षूणां दूतमनुप्रेषयन्ति। निर्गच्छन्त्वार्या वयमत्र वत्स्यामः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे वर्षा उपगतः। इमे चेमे चौरा ग्रामघातं कृत्वा पूर्ववद्यावदस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतो

भवति स चौरैर्गृहीतो भवति। चौरभयेन वा परराष्ट्रं परविषयं निष्पलान उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मि[न्नावासे] यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः [स चौरैर्गृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। चौरभयेन वा परराष्ट्रं परविषयं निष्पलान उच्छिद्य वा कालगतः।] अहं चेदस्मिन्नावासे वर्षा [वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमस्मादावासात् प्रक्रामेयम्। स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृ]त्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तदन्यतमेन महल्लेन बालेन मूढेनाव्यक्तेनाकुशलेन [गोचरे वा गोचरमार्गे वा कुलस्त्री वा कुलकुमारी वा आक्रुष्टा भवत्याभाष्टा परामृष्टा वा। मनुष्या प्रकुप्य आरामद्वारमागत्य यथागृहीतकमुद्घोषयन्ति। पूर्ववद् (See p. 119) या]वत्स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिवर्षोच्छेदे।

यथापि तद्भिक्षुर्यं स्त्रीपु[रुषपण्डकमुपनिश्रित्य वर्षा उपगतो भवति। [स मनुष्येणोपगृहीतो भवति बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। मनुष्यभयेन वा परराष्ट्रं परवि-]षयं निष्पलानः उच्छिद्य वा कालगतः। तत्र वर्षोषितस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे यं [स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः स मनुष्येणोपगृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। मनुष्यभयभीतो] परराष्ट्रं वा परविषयं निष्पलानः उच्छिद्य वा कालगतः। अहं चेदस्मिन्नावासे वर्षा

वसेयं स्यान्मे [अतो निदानं जीवितान्तरायः श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः । यत्त्वहमस्मादावासात् प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदे]व प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्विहारः अमनुष्याध्युषिते प्रदेशे प्रतिष्ठापितो भव[ति । अन्यतमेन च महल्लेन बालेन मूढेनाव्यक्तेनाकुशलेनाप्रतिरूपे प्रदेशे उच्चारप्रस्रावं पूर्ववद् यावत् (See p. 120) शयनासनं प्रविक्षिप्तम् । स तस्मादावासात् प्र]क्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य [वर्षा उपगतो भवति । सः अमनुष्यगृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम् । अमनुष्यभयभीतः परराष्ट्रं वा] परविषयं निष्पलानः उच्छिद्य वा कालगतः । तत्र वर्षोपगतस्य भिक्षोरेवं भवति । अहमस्मिन्नावा[से स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः । सः अमनुष्येण गृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम् । अमनुष्यभयभीतो] वा परराष्ट्रं परविषयं निष्पलानः उच्छिद्य वा कालगतः । अहं चेदस्मिन्नावासे वर्षा उपगच्छेयं स्या[न्मे अतो निदानं जीवितान्तरायो ब्रह्मचर्यान्तरायः श्रामण्यान्तरायः । यत्त्वहमस्मादावासात् प्रक्रामेयम् । स तस्मादावासात् प्रक्रामत्येतदेव प्रत्य]यं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्विहारः व्याडाध्युषिते प्रदेशे प्रतिष्ठापितो भवति । अन्यतमेन च महल्लेन बालेन पूर्ववद् यावत् (See p. 120) शयनासनं प्रविक्षिप्तम् । व्याडाः प्रकुपिताः गोचरेऽवतिष्ठन्ति गोचरमार्गे

चंक्रमे मेड्रां द्वारकोष्ठकेऽपि भिक्षूनध्याविशन्ति। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। पूर्ववद् यावत् स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य [वर्षा उपगतो भवति।] स व्याडैर्गृहीतो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। व्याडभयभीतः परराष्ट्रं वा परविषयं निष्पलानः उच्छिद्य वा कालगतः। अहमस्मिन्नावासे स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। स व्याडैर्गृहीतः पूर्ववत् यावत् कालगतः। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवि]तान्तरायो श्रामण्यान्तरायो ब्रह्मचर्यान्तरायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्राम[त्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्विहारो नागाध्युषिते प्रदेशे प्रतिष्ठापितो भवति। अन्यतमेन महल्लेन बालेन पूर्ववत् यावत् शयनासनं प्रविक्षिप्तम्। नागाः प्रकुपिता गोचरेऽपि तिष्ठन्ति गोचरमार्गेऽपि पूर्ववत् यावत् अध्याविशन्ति। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। पूर्ववद् यावत् स तस्मादावासात् प्रक्रामत्येतदेव प्रत्ययं कृ]त्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। स नागैर्गृही[तो बद्धो वा घातितो वा सन्तःस्वापतेयं वास्यापहृतम्। नागभयभीतो परराष्ट्रं वा परविषयं निष्पलानः उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति।] अहमस्मिन्नावासे

स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। स नागैर्गृहीतो वा बद्धो वा घातितो वा [सन्तःस्वापतेयं वास्यापहृतम्। पूर्ववत् यावत् कालगतः। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो] निदानं जीवितान्तरायो ब्रह्मचर्यान्तरायः श्रामण्यान्तरायः। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात् [प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्विहारो दावमध्ये प्रतिष्ठापितो भवति। अग्निर्मुक्तः इत्यग्निर्ग्रामनिगमराजराष्ट्रधानीं दहन् परैति। गोचरमपि दहति गोचरमार्गमपि चंक्रमं मेडीं द्वारकोष्ठकं विहारमपि दहति विहारसामन्तकमपि। पूर्ववत् यावत् [स तस्मादावासात्] प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। [सः अग्निना दग्धः। अग्निभयेन [वा] परराष्ट्रं परविषयं निष्पलानः उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहमस्मिन्नावासे स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। सोऽग्निना दग्धः सन्तःस्वापते[यं वास्याग्निना दग्धम्। अग्निभयेन परराष्ट्रं वा परविषयं निष्पलानः उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहं] स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः। सोऽग्निना दग्धः सन्तःस्वापतेयं वास्याग्निना दग्धम्। अग्निभयेन वा [परराष्ट्रं वा परविषयं निष्पलानः उच्छिद्य वा कालगतः। तत्र वर्षोपगतस्य भिक्षोरेवं भवति। अहं चेदस्मिन्नावासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायो ब्रह्म-

चर्यान्तरायः श्रामण्यान्तरायः । ] यत्त्वहमस्मादावासात्प्रक्रामेयम् । स तस्मादावासात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

[यथापि तद्विहारः अनूपमध्ये प्रतिष्ठापितो भवति । उपरि पर्वतसंक्षेपे स्थूलबिन्दुको देवो वर्षन् ग्रामनिगमराजराष्ट्रधानीं वहन् परैति । गोचरमपि पूर्ववत् (See p. 122) यावत् संस्यन्दयति । तत्र वर्षोपगतस्य भिक्षोरेवं भवति । अहं च अस्मिन्नावासे वर्षा उपगतः । अयं विहारः अनूपमध्ये प्रतिष्ठापितः । उपरि पर्वत-संक्षेपे पूर्ववत् यावत् स तस्मादावासात् प्रक्रामत्येदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे ।

यथापि तद्भिक्षुर्यं स्त्रीपुरुषपण्डकमुपनिश्रित्य वर्षा उपगतः । स उदकेनोढः सन्तःस्वापतेयं वास्योदकेनोढं भवति । उ[च्छिद्य वा कालगतः । तत्र वर्षोपगतस्य भिक्षोरेवं भवति । अहमस्मिन्ना-वासे स्त्रीपुरुषपण्डकमुपनिश्रित्य] वर्षा उपगतः । स उदकेनोढः उदकभयेन वा परराष्ट्रं परविषयं निष्पलानः उच्छिद्य वा [कालगतः । तस्य वर्षोपगतस्य भिक्षोरेवं भवति । अहं चेदस्मिन्ना-वासे वर्षा वसेयं स्यान्मे अतो निदानं जीवितान्तरायः श्रामण्यान्त-रायो ब्रह्मचर्यान्तरायः । यत्त्वहमस्मादावासात् प्रक्रामेयम् । स तस्मादावा]सात्प्रक्रामत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे[1] ।

उद्दानम् ।

**अना[प]त्तिः संवासेन प्रति[संस्कर्तव्यम् ।**
**पूर्वं द्वादश पश्चिमं च द्वादश] ॥**

1 Cf. Pali *Vinaya Piṭaka*, I, p. 148-9.

यथापि तद्वर्षोपगतो भिक्षुः पश्यति। अस्मिन्नावासे भिक्षुर्ज्ञापयति संज्ञापयति शिक्षयति ग्राहय]ति संघभेदाय पराक्रामति। स्थानमेतद्विद्यते यदस्मिन्नेवान्तर्वर्षे संघो भिद्यते। त[स्य वर्षोपगतस्य भिक्षोरेतदभवत्। अस्मिन्नावासे वर्षोपगतो भिक्षुर्ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति संघभेदाय] पराक्रामति। स्थानमेतद्विद्यते यदस्मिन्नेवान्तर्वर्षे संघो भिद्येत। अहं चेदस्मिन्नावासे वर्षा वसेयम्। [असमग्रचित्तो भवेयं चाप्राप्तस्य प्राप्तये अनधिग]तस्याधिगमाय असाक्षात्कृतस्य साक्षात्क्रियायै। यत्त्वहमस्मादावासात्प्रक्रामेयम्। स तस्मादावासात्प्रक्रा[मत्येतदेव प्रत्ययं कृत्वा अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतो भिक्षुः शृणोति। अमुष्मिन् आवासे भिक्षुस्तथा तथा ज्ञापयति] संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय पराक्रामति। स्थानमेतद्विद्यते। यत्त्वमुष्मिन्नावासेऽन्त-[र्वर्षे संघो भिद्यते। स भिक्षुर्मम आलप्तकः संलप्तकः संस्तुतकः सप्रेमकः। तस्य भिक्षोरेतदभवत्। स चेत् तत्र गत्वा मया एवं कर्तव्यं] यथा तस्मिन्नावासे अस्मिन्नेवान्तर्वर्षे संघो न भिद्येत। गन्तव्यं भिक्षुणा सप्ताहमधिष्ठाय संघस्य क[रणीयेन। सचेद् गच्छतीत्येवं कुशलं नो चेद्गच्छति सातिसारो भवति। सचेत्तु गतस्य सप्ताहोऽतिक्रान्तः] अनापत्तिर्वर्षोच्छेदे।

यथापि तद्वर्षोपगतो भिक्षुः शृणोति। अमुष्मिन्नावासे भिक्षुर्भिक्षुं तथा तथा [ज्ञापयति संज्ञापयति शिक्षयति संघस्य भेदाय पराक्रामति। स्थानमेतद् विद्यते। यत्त्वमुष्मिन्नावासे

अन्तर्वर्षे संघो भिद्येत। अस्ति तस्य भिक्षोरालप्तकः संलप्तकः संस्तुतकः सप्रेमकः। अपितु यस्यासौ भिक्षुरालप्तकः संलप्तकः संस्तुतकः [सप्रेमकः स ममापि आलप्तकः संलप्तकः सप्रेमकः। तस्य भिक्षोरेतदभवत्। सचेत् तत्र गत्वा मया एवं कर्तव्यं यथा तस्मिन्नावासे अस्मिन्नेवान्तर्वर्षे संघो न भिद्येत। गन्तव्यं भिक्षुणा संघ]करणीयेन। स चेद्गच्छतीत्येवं कुशलं नो चेद्गच्छति साति-सारो भवति। सचेत्तु गतस्य सप्ताहोऽतिक्रान्तोऽनापत्तिर्वर्षोच्छेदे।

[यथापि तद्भिक्षुः प्रतिश्रृणोति। अमुष्मिन्नावासे पूर्विकां त्रैमासीं वत्स्ये तस्मिन्नावासे तौ वसतः। पोषधान्ते] तस्यैवं भवति। इहापि मे वसतः स एव। [तत्रापि] मे वसतः [स एव। स प्रतिश्रुत्य तस्मिन्नावासे न वसति। प्रतिश्रवेण दुष्कृतः।] तस्यैवं भवति। इहापि मे वसतः स एव। [तत्रापि] मे वसतः ....

[यथापि तद्भिक्षुः प्रतिश्रृणोति। अमुष्मिन्नावासे पूर्वि]कां त्रैमासीं वत्स्ये[1]। स प्रतिश्रुत्य गच्छति। गत्वा शलाका-दीन्न प्रतिगृह्णाति। तस्मिन्नावासे पूर्विकां त्रैमासीं न प्रज्ञायते। प्रतिश्रवेण च दुष्कृतः।

[यथापि तद् भिक्षुः प्रतिश्रृणोति। अमुष्मिन्नावासे पूर्विकां त्रैमासीं वत्स्ये। स प्रतिश्रुत्य गच्छति। गत्वा शलाकादीन् गृह्णाति। पश्चात् शयनासनं न प्रतिगृह्णाति। अपि]च तस्य तस्मिन्नावासे पूर्विकां त्रैमासीं न प्रज्ञायते। प्रतिश्रवेण च दुष्कृतः।

1 Ms. वत्से।

यथापि तद्भिक्षुः प्रतिश्रृणोति अमुष्मिन्नावासे पूर्विकां त्रैमासीं वत्स्ये। [स प्रतिश्रुत्य गच्छति। गत्वा शलाकादीन् प्रतिगृह्णाति शयनासनं च। स प्रतिश्रुत्य कृत्यकरणीयेन गच्छति। अपि च तस्य तस्मिन्नावासे पूर्विकां त्रै]मासीं न प्रज्ञायते। प्रतिश्रवेण च दुष्कृतः।

यथापि तद्भिक्षुः प्रति[श्रृणोति। अमुष्मिन्नावासे पूर्विकां त्रैमासीं वत्स्ये। स प्रतिश्रुत्य गच्छति। गत्वा स शलाकादीन् प्रतिगृह्णाति [शयनासनं च। स प्रतिश्रुत्य कृत्यकरणीयेन सप्ताहमनधिष्ठाय सीमातिक्रान्तः। तत्र गत्वापि च तस्य अमु]ष्मिन्नावासे पूर्विकां त्रैमासी न प्रज्ञायते। प्रतिश्रवेण च दुष्कृतः।

[यथापि तद्भिक्षुः प्रतिश्रृणोति। अमुष्मिन्नावासे पूर्विकां त्रैमासीं वत्स्ये। स प्रतिश्रुत्य गच्छति। गत्वा स शलाकादीन् प्रतिगृह्णाति शयनासनं च। कृत्यकरणीयेन सप्ताहमधिष्ठाय सीमातिक्रान्तः। अपि च तस्य अमुष्मिन्नावासे पूर्विकां त्रैमासीं न प्रज्ञायते। प्रतिश्रवेण न दुष्कृतः।] स चेत्तत्र [कृत्यकरणीयेन] सप्ताहोऽतिक्रान्तः अनापत्ति[र्वर्षोच्छेदे। षट्कर्म एवं कर्तव्यम्। यथा पूर्विकां त्रैमासीं तथापि पश्चिमिकां] त्रैमासीम्।

वर्षावस्तु समाप्तम्॥

उद्दानम् ।

पञ्चभिरुपसंप[दा शयनासन] … ।

… … … … … … ॥

[बुद्धो भगवाञ्छ्रावस्त्यां विहरति स्म जेतवनेऽनाथपिण्डदस्यारामे[1] । तस्मिन् समयेऽश्मकनगरान्तके वासव]ग्रामके[2] बलसेनो नाम गृहपतिः प्रतिवसत्याढ्यो महाधनो महाभोगो [विस्तीर्णविशालपरिग्रहो वैश्रवणधनप्रतिस्पर्द्धी । तेन सदृशात् कुलात् कलत्रमानीतम् । स तया सार्द्धं क्रीडति रमते परिचारय]ति । तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता[3] । [सोऽपुत्रः पुत्राभिनन्दी शिव-वरुण-कुबेर-शक्र-ब्रह्मादीनायाचते । आरामदेवतां वनदेवतां श्रृङ्गाटकदेवतां बलि]प्रतिग्राहिकां[4] देवतां सहजां सहधर्मिकां नित्यानुबद्धामपि देवतामायाचते । अस्ति चैष लोकप्रवा[दो यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति । तच्च नैवम् । यद्येवमभविष्यदेकैकस्य पुत्रसहस्रमभविष्यत् तद् यथा राज्ञश्चक्रवर्तिनः । अपि तु त्रयाणां स्थाना]नां सम्मुखीभावात् पुत्रा जायन्ते दुहितरश्च । कतमेषां त्रयाणाम् । मातापितरौ रक्तौ भवतः संनिपतितौ माता कल्या भवति ऋतुमती गन्धर्वश्च प्रत्युपस्थितो[5] भवति । एषां त्रयाणां स्थानानां सम्मुखीभावात् पुत्रा जायन्ते दुहितरश्च । [6]स चैवमायाचनपरस्तिष्ठति । अन्य-

1 This story appears in Cowell's edition of the *Divyāvadāna*, pp 1-24. In the footnotes D. indicates the reading in Cowell's edition.

2 D. ग्रामे

3 D. drops this line.

4 D. परिग्राहिकां

5 D. ०स्थिता

6 Ms. सर्वैव

तमश्च स[त्त्वश्चरमभविकश्चरितैषी[1] गृहीतमोक्षमार्गोऽन्तर्मुखो[2] निर्वाणे बहिर्मुखः संसाराद् अनर्थिकः सर्वभ]वगति[3]च्युत्युपपत्तिषु अन्तिमदेहधारी अन्यतमस्मात् [4]देवनिकायाच्च्युत्वा तस्याः प्रजापत्याः कुक्षिमवक्रान्तः। पञ्चावेणिका धर्मा एकत्ये पण्डितजातीये मातृग्रामे। कतमे [पञ्च। रक्तं पुरुषं जानाति विरक्तं जानाति। कालं जानाति ऋतुं जानाति। गर्भमवक्रान्तं जानाति। यस्य सका]शाद् गर्भमवक्रामति तं जानाति। दारकं जानाति। दारिकां जानाति। सचेद् दारको भवति दक्षिणं कुक्षिं निश्रित्य तिष्ठति। सचेद् दारिका भवति वामं कुक्षिं निश्रित्य तिष्ठति। [सात्तमनात्तमनाः स्वामिन आरोचयति। [5]दिष्ट्यार्यपुत्र वर्द्धस्वापन्नसत्त्वास्मि संवृत्ता। यथा[6] च] मे दक्षिणं कुक्षिं निश्रित्य तिष्ठति नियतं दारको भविष्यति। सोऽप्यात्तमनात्तमना उदानमुदानयति। अप्येवाहं चिरकालाभिलषितं पुत्र[मुखं पश्येयं सम]जातो मे स्यान्नावजातः[7]। कृत्यानि मे कुर्वीत भृतः प्रतिबिभृयाद्दायाद्यं प्रतिपद्येत कुलवंशो] मे चिरस्थितिकः स्यात्[8]। अस्माकं चाप्यतीत[9]कालगतानामल्पं वा प्रभूतं वा दानानि दत्त्वा पुण्यानि कृत्वा[10] अस्माकं

1 D. श्चहितैषी
2 D. मार्गान्तोन्मुखो न निर्वाणे
3 D. सर्वभवगतिव्युपपत्तिपराङ्मुखोऽन्तिमदेहधारी। Cf. Tib. 252a, l. 6.
4 D. सत्त्वनिकाया
5 Ms. दिष्टा आर्यपुत्र वरखापन्न
6 Ms. यदा च
7 Tib. 252b, l. 3: བདག་དང་མཐུན་པར་སྐྱེ་ཞིང་མི་མཐུན་པར་མི་སྐྱེ་བ་དང །
8 D. स्थितिको भविष्यति।
9 D. चात्यतीत Ms. चाभ्यतीत०
10 D. कृत्वा दक्षिणां आदेशयिष्यति

नाम्ना दक्षिणामादेक्ष्यति। इदं [तयोर्यत्र यत्नोपपन्नयोर्गच्छतोरनु-गच्छत्विति। आपन्नसत्त्वां चैनां विदित्वा उपरि प्रासादतल-गतामयन्त्रि]तां धारयति शीते शीतोपकरणैरुष्णे उष्णोप-करणैर्वैद्यप्रज्ञप्तैराहारैर्नातितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिमधुरैर्नाति-कटु[कैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारै-र्हारार्द्धहारविभूषितगात्रीम्] अप्सरसमिव नन्दनवनविचा-रिणीं मञ्चान्मञ्चं पीठात् पीठम् अनवतरन्तीम् अधरिमां भूमिम्[1]। न चास्या[2] किञ्चिदमनोज्ञशब्दश्रवणं यावद् [एव गर्भस्य परिपाकाय। साष्टानां वा नवानां वा मासानामत्य-यात् प्रसूता। दारको जातः। अभिरूपो दर्शनीयः] प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः[3] प्रलम्बबाहुर्विस्तीर्ण[विशाल]-ललाटः सङ्गतभ्रुरुत्तुङ्गनासो रत्नप्रत्युप्तिकया कर्णिकया आमुक्तयालङ्कृतः। बल[सेनेन गृहपतिना रत्नपरीक्षका आहू-योक्ताः। भवन्तो रन्तानां मूल्यं कुरुत इति। न शक्यते [4]रत्नानां] मूल्यं कर्तुम् [इति।] धर्मता[5] खलु यस्य रत्नस्य न शक्यते मूल्यं कर्तुं तस्य कोटिर्मूल्यं क्रियते[6]। ते कथयन्ति। गृहपते एषां रत्नानां[7] कोटिर्मूल्यम् इति। तस्य ज्ञातयः [संगमय समागमय[8] त्रीणि सप्तकान्येकविंशतिदिवसानि विस्तरेण जातस्य जातिमहं कृत्वा नाम-

1 D. अवतरन्ती उपरिमा भूमिं
2 D. न चास्या अमनोज्ञ०
3 Ms. शिरः
4 Ms. नासः सरत्नप्रत्युप्तिकया कर्णे आमुक्तिकया बल०
5 D. धर्मता यस्य न
6 Ms. भवति
7 D. अस्य रत्नस्य
8 For संगम्य समागम्य

धेयं व्यवस्था]पयन्ति। किं भवतु दारकस्य नामेति। ज्ञातयः ऊचुः[1]। अयं दारकः कोटिमूल्यया रत्नप्रत्युप्तिकया [आमुक्तया] जातः श्रवणेषु च नक्षत्रेषु[2]। भवतु दारकस्य श्रो[णः कोटीकर्ण इति नाम। यस्मिन्नेव दिवसे श्रोणः कोटीकर्णो जातस्तस्मिन्नेव दिवसे बलसेनस्य गृहपतेर्द्वौ प्रेष्य]दारकौ जातौ। तेनैकस्य दासक इति नामधेयं व्यवस्थापितम् अपरस्य[3] पालक इति। श्रोणः कोटीकर्णोऽष्टाभ्यो धात्रीभ्योऽनुप्रदत्तो द्वाभ्याम् अंसधात्रीभ्यां द्वाभ्यां [क्रीडनिकाभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्द्धते क्षीरेण दध्ना] नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्ध्यते[4] ह्रदस्थमिव पङ्कजम्। स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः संख्यायां [गणनायां मुद्रायाम् उद्धारे न्यासे निक्षेपे वास्तुपरी]क्षायां[5] रत्नपरीक्षायाम्। सोऽष्टासु परीक्षासूद्‌घाटको वाचकः पण्डितः पटुप्रचारः संवृत्तः। तस्य पित्रा [त्रीणि वासगृहाणि मापितानि। हैमन्तिकं ग्रैष्मिकं वार्षिकम्[6]]। त्रीण्युद्यानानि मापितानि हैमन्तिकं [ग्रैष्मिकं वार्षिकम्। त्रीण्यन्तःपुराणि प्रत्युपस्थापि]तानि ज्येष्ठकं मध्यमं कनीयसम्। स उपरिप्रासादतलगतो निष्पुरुषेण तूर्येण क्रीडति रमते परिचारयति। बलसेनो गृहपतिर्नित्यमेव कृ[षिकर्मान्ते उद्‌युक्तः। स कोटीकर्णस्तं पितरं पश्यति

1 D. omits ज्ञातयः ऊचुः।

2 Ms. श्रवणेन च नक्षत्रेण

3 Ms. अपरस्यापि

4 Ms. वर्धते

5 Ms. adds स्त्रीपरीक्षायां पुरुषपरीक्षायां दारुपरीक्षायाम्

6 Ms. omits from त्रीणि वासगृहाणि...वार्षिकम्।

नित्यं कृषिकर्मान्ते उद्युक्तम्। स कथयति। तात कस्यार्थे त्वं नित्यमेव कृषिकर्मान्ते उ]द्युक्तः। स कथयति। पुत्र यथा त्वमुपरिप्रासादतलगतो निष्पुरुषेण [तूर्येण] क्रीडसि रमसे परिचारयसि यद्यहमप्येवमेव क्रीडेयं रमेयं परिचारयेयं [न चिरादेवास्माकं भोगास्तनुत्वं परिक्षयं पर्यादानं गच्छेयुः[1]। स संलक्षयति। ममैवार्थं चोदना क्रियते। स कथयति। तात यद्येवं पण्यमादाय] देशान्तरं गच्छामि[2]। [पिता कथयति]। पुत्र तावन्तं मे रत्नजातमस्ति यदि त्वं तिलतण्डुलकोलकुलत्थन्यायेन रत्नानि परिभोक्ष्यसे[3][तथापि] मे रत्नानां परिक्षयो न स्यात्। [स कथयति। तातानुजानीहि मां गच्छामि पण्यमादाय देशान्तरमिति। बलसेनेन तस्यावश्यं निर्बन्धं ज्ञात्वा अनुज्ञातः[4]। बलसेनेन गृहपतिना वासवग्रामके घण्टावघोषणं[5] कारितं यो युष्माकम्[6] उत्सहते श्रोणेन कोटीकर्णेन सार्थवाहेन [सार्धम्]-शुल्केनातर्पण्येन[7] महासमुद्रमवततुं स महासमुद्रगमनीयं पण्यं समुदानयतु। पञ्चभिर्वणिक्शतैर्महासमुद्रगमनीयं पण्यं समुदानीतम्। बलसेनो [नाम गृहपतिः संलक्षयति।] कीदृशेन

1 Ms. पर्याधानं गच्छेयुः। स कथयति। तात यद्येवमहं पण्यमारोचया।

2 D. महासमुद्रमवतरामि। Tib. 253b. l. 7: ཇོང་གྲོགས་ལ་ཕྱུལ་གྱི་མཐར་མཆིའོ།

3 Ms. परिभुंजीयात्

4 Ms. तात गच्छामि पण्यमादाय देशान्तरम्। तेन निर्बन्धं ज्ञात्वा अनुज्ञातः।

5 D. कृतम् कारितं

6 Ms. puts भवन्तः

7 Ms. ०वाहेनाशुल्केनातरपन्येन

यानेन श्रोणः कोटीकर्णो यास्यति । स संलक्षयति । सचेद्धस्तिभिर्हस्तिनः सुकुमारा दुर्भराश्च । अश्वा अपि सुकुमारा दुर्भराश्च । गर्दभाः स्मृतिमन्तः सुकुमाराश्च । गर्दभयानेन गच्छत्विति । स पित्राहूयोक्तः[1] । पुत्र न त्वया सार्थस्य पुरस्ताद् गन्तव्यं [नापि पृष्ठतः] । यदि बलवांश्च[2] चौरो भवति सार्थस्य पुरस्तान्निपतति दुर्बलो भवति पृष्ठतो निपतति । त्वया सार्थस्य मध्ये गन्तव्यं न[चेत्] हते सार्थवाहे हतः सार्थो भवेत्][3] । दासकपालकावपि अभिहितौ[4] । पुत्रौ युवाभ्यां न केनचित् प्रकारेण श्रोणः कोटीकर्णो मोक्तव्य इति । अथापरेण समयेन श्रोणः कोटीकर्णः कृतकौतुकमङ्गलस्वस्त्ययनो मातुः सकाशमुपसंक्रम्य पादयोर्निपत्य कथयति । [5]अम्ब गच्छामि अवलोकिता भव महासमुद्रमवतरामि । सा रुदितुमारब्धा । स कथयति । अम्ब कस्माद् रोदिषि[6] । माता साश्रुदुर्दिनवदना कथयति । पुत्र कदाचिदहं पुत्रकं पुनरपि जीवन्तं द्रक्ष्यामि इति[6] । स संलक्षयति । अहं मङ्गलैः संप्रस्थितः । इयमीदृशममङ्गलमभिधत्ते । स रुषितः कथयति । अम्ब अहं कृतकौतुकमङ्गलस्वस्त्ययनो महासमुद्रं संप्रस्थितः । त्वं चेदृशान्यमङ्गलानि करोषि । अपायान् किं न पश्यसीति । सा कथयति । पुत्र खरं ते वाक्कर्म निश्चारितम् ।

1 Ms. तेन स आहूतः ।

2 Ms. बलवन्तः

3 Ms. न मध्ये । मध्ये सार्थस्य वस्तव्यं हते सार्थवाहे

4 D. उक्तौ

5 Ms. उपसंक्रान्तः । अम्ब गच्छाम्यहं अभिवादये । सा रुदितुं

6 Ms. रोदिषि । पुत्रक नाहं त्वं पश्येयं । स संलक्षयति ।

अत्ययमत्ययतो देशय। अप्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। सा तेनात्ययमत्ययतः क्षमापिता। अथ श्रोणः कोटीकर्णः कृतकौतुकमङ्गलस्वस्त्ययनः शकटैर्भारैर्मोटैः पिटकैरुष्ट्रैर्गोभिर्गर्दभैः प्रभूतं समुद्रगमनीयं पण्यमारोप्य महासमुद्रं संप्रस्थितः।

सोऽनुपूर्वेण ग्रामनगरनिगमपल्लीपत्तनेषु चञ्चूर्यमाणो महा-[1]समुद्रतटमनुप्राप्तः। निपुणतः सामुद्रं यानपात्रं प्रतिपद्य महासमुद्रमवतीर्णो धनहारकः सोऽनुगुणेन वायुना रत्नद्वीपमनुप्राप्तः। तेन तत्रोपपरीक्ष्योपपरीक्ष्य रत्नानां तद्वहनं पूरितं तद् यथा तिलतण्डुलकोल्कुलत्थानाम्[2]। सोऽनुगुणेन वायुना संसिद्धयानपात्रो जम्बुद्वीपमनुप्राप्तः। स सार्थस्तस्मिन्नेव समुद्रतीरे आवासितः। असौ [श्रोणः कोटीकर्णो]ऽपि [सार्थवाहो] दासकपालकावादाय [सार्थमध्याद्]एकान्तेऽपक्रम्य आयं व्ययं च तुलयितु[3]मारब्धः। पश्चात्तेनासौ दासकोऽभिहितः। दासक पश्य सार्थः किं करोतीति। स गतः। यावत् पश्यति सार्थं सुप्तम्। सोऽपि तत्रैव सुप्तः[4]। दासकश्चिरायतीति कृत्वा पालकोऽभिहितः। पालक पश्य सार्थः किं करोतीति। स गतः। यावत् पश्यति स्थोरां लर्दयन्तं[5] सार्थम्। सोऽपि स्थोरां लर्दयितुमारब्धः। दासकः संलक्षयति। पालकः सार्थवाहं शब्दापयिष्यति। पालकोऽपि

1 Ms. समुद्रतीरस॰

2 Ms. ॰तण्डुलकोलत्थानीनाम्

3 Ms. गणयितु॰

4 Ms. शयितस्तेन दासक॰

5 Tib. 255a. l. 2: ཁལ་འགེལ་བ=to put the load

संलक्षयति । दासकः सार्थवाहं शब्दापयिष्यतीति । स सार्थः [सरात्रिमेव] स्थोरां लर्दयित्वा संप्रस्थितः । सोऽपि गाढनिद्रा-वष्टब्धः शयितः । [स] सार्थस्तावद्गतो यावत् प्रभातम् । ते कथयन्ति । भवन्तः क[1] सार्थवाहः । पुरस्ताद् गच्छति । पुरस्ताद् गत्वा पृच्छन्ति क सार्थवाहः । पृष्ठत आगच्छति । पृष्ठतो गत्वा पृच्छन्ति क सार्थवाहः । मध्ये गच्छति । मध्ये गत्वा पृच्छन्ति । यावत् तत्रापि नास्ति । दासकः कथयति । मम बुद्धिरुत्पन्ना पालकः सार्थवाहं शब्दापयिष्यति । पालकोऽपि कथयति । मम बुद्धिरुत्पन्ना दासकः सार्थवाहं शब्दापयिष्यतीति । भवन्तो न शोभनं कृतं यदस्माभिः सार्थवाहश्छोरितः । आगच्छत निवर्तामः । ते कथयन्ति । भवन्तो यदि वयं निवर्तिष्यामः[2] सर्व एवानयेन व्यसनमापत्स्यामः । आगच्छत क्रियाकारं तावत् कुर्मः । तावन्न केनचिच्छ्रोणस्य कोटीकर्णस्य मातापितृभ्यामारोचयितव्यं यावद् भाण्डं न प्रतिशामितं भवतीति[3] । ते क्रियाकारं कृत्वा गताः । श्रोणस्य कोटीकर्णस्य मातापितृभ्यां श्रुतं श्रोणः कोटीकर्णोऽभ्या-गत इति । तौ प्रत्युद्गतौ । क सार्थवाहः । मध्ये आगच्छति । मध्ये गत्वा पृच्छतः क सार्थवाह इति । ते कथयन्ति । पृष्ठत आगच्छति । पृष्ठतो गत्वा पृच्छतः । क सार्थवाहः । पुरस्ताद् गच्छतीति । तैस्तावदाकुलीकृतौ यावद्भाण्डं प्रतिशामितम् । ततः पश्चात्ते कथयन्ति । अम्ब विस्मृतोऽस्माभिः सार्थवाह इति । ताभ्या-

1 Ms. कुत्र

2 Ms. निवर्त्यिष्यामः

3 Tib. 255a. l. 7: རྫས་རྣམས་མ་བྲུབས་ཀྱི་བར་དུ = till the goods are laid aside

मेक आगत्य कथयति। अयं श्रोणः कोटीकर्णोऽभ्यागत इति। तस्य तावभिसारं[1] दत्त्वा प्रत्युद्गतौ न पश्यतः। अपर आगत्य कथयति[2]। अयं श्रोणः कोटीकर्णोऽभ्यागत इति। तस्य तावभिसारं दत्त्वा प्रत्युद्गतौ न पश्यतः। तौ यावत् न कस्यचित् पुनरपि श्रद्दधातुमारब्धौ। ताभ्यामुद्यानेषु[3] देवकुलेषु छत्राणि घण्टाव्यजनानि[4] अक्षराणि लिखितानि[5] यदि तावच्छ्रोणः कोटीकर्णो जीवति लघ्वागमनाय[6]। [अथ] च्युतः कालगतो गत्युपपत्तिस्थानात् स्थानान्तरविशेषतायै। तौ शोकेन रुदन्तावन्धीभूतौ। सोऽपि सूर्यस्याभ्युद्गमनकालसमये[7] सूर्यांशुभिराभान्वितः प्रतिबुद्धो यावत् सार्थं न पश्यति। नान्यत्र तावेव गर्दभावतिष्ठतः। स तौ योजयित्वा संप्रस्थितः। वालुकास्थले वायुना मार्गः पिहितः। स्मृतिमन्तो गर्दभा जिघ्रित्वा संप्रस्थिताः शनैर्गच्छन्तीति प्रतोदयष्ट्या[7] स्पृष्टाः शालाटवीं प्रविष्टाः। ते तृषार्ता

1 Tib. 255b. l. 3: རྔན་པ།=reward

2 D. adds अम्ब दिष्ट्या वर्धस्व

3 D. स्वकसभादेव०

4 D. adds कलशान्युपानहानि

5 D. adds दत्तानि स्थापितानि

6 D. adds क्षिप्रमागमनाय

7 D. श्रोण कोटीकर्णः सार्थवाहोऽपि सूर्यांशुभिः स्पृष्ट आतापितः प्रतिविबुद्धो यावत् सार्थं न पश्यति। नान्यत्र गर्दभयानमेव। स तं गर्दभयानमभिरुह्य संप्रस्थितः। रात्रौ च वातेन प्रवायता वालुकया मार्गः व्यपोढ़ पिथितः। ते च गर्दभाः स्मृतिमन्तो गन्धमाघ्रायाघ्राय शनैर्मन्दमन्दं संप्रस्थिताः। सार्थवाहः संलक्षयति। कस्मादेते शनैर्मन्दमन्दं गच्छन्तीति कृत्वा प्रतोदयष्ट्या ताडिताः। ते संभ्रान्ताः आकुलीभूताः स्मृतिभ्रष्टा उन्मार्गेण संप्रस्थिता यावदन्यतमा शालाटवीं प्रविष्टा।

[विह्वलवदना] जिह्वां निर्नामय्य गच्छन्ति। तान् दृष्ट्वा तस्य कारुण्यमुत्पन्नम्। स संलक्षयति। यद्येतान् नोत्स्रक्ष्यामि एभिरेव सार्धमनयेन व्यसनमापतस्ये[1]।

स तानुत्सृज्य पद्धयां संप्रस्थितः। यावत् पश्यति आयसं नगरम् उच्चं[2] च प्रगृहीतं च। तत्र द्वारे पुरुषस्तिष्ठति कालो रौद्र[श्चण्डो] लोहिताक्ष उद्बद्धपिण्डो लोहलगुडव्यग्रहस्तः[3]। स तस्य सकाशमुपसंक्रान्तः। भोः पुरुष। अस्त्यत्र पानीयम्। स तूष्णीमवस्थितः[4]। भूयस्तेन पृष्टोऽसौ पुरुषोऽस्त्यत्र पानीयमिति। भूयोऽपि स तूष्णीमवस्थितः[5]। तेन [सार्थवाहेन] तत्र प्रविश्य पानीयं पानीयमिति शब्दो निश्चारितः[6]। यावत् पञ्चमात्रैः[7] प्रेतसहस्रैर्दग्धस्थूणासदृशैरस्थियन्त्रवदुच्छ्रितैः स्वकेशरोमप्रच्छन्नैः पर्वतसन्निभोदरैः[8] सूचीच्छिद्रोपममुखैरनुपरिवारितः[9] श्रोणः कोटीकर्णः। [ते कथयन्ति। सार्थवाह] कारुणिकस्त्वमस्माकं तृषार्तानां पानीयमनुप्रयच्छ। स कथयति। भवन्तोऽहमपि पानीयमेव मृगयामि कुतोऽहं युष्माकं पानीयमनुप्रयच्छामीति[10]। ते कथयन्ति। सार्थवाह[11] प्रेतनगरमिदं कुतः खल्वत्र पानीयम्। अद्यास्माभि-

1 D. adds कोऽसौ निर्घृणहृदयस्त्यक्तपरलोकश्च य एषां प्रतोदयष्टिं काये निपातयिष्यति। तेन ते उत्सृष्टाः। अद्याग्रेण अच्छिन्नाग्राणि तृणानि भक्षयत अनवमर्दितानि पानीयानि पिबत अनाविलानि चतुर्दिशं च शीतला वायवो वान्त्विति। 2 Ms. उर्ध्व

3 Ms. तत्र कालो चण्डो लोहिताक्षः उद्बन्धपिण्डकायष्टि विग्रहो पुरुषो द्वारे तिष्ठति।

4 D. व्यवस्थितः। 5 D. व्यवस्थितः। 6 Ms. शब्दीकृतः।

7 Ms. अनेकैः प्रेत 8 D. पर्वतोदरसन्निभैः 9 Es. परिवृतः

10 Ms. दास्यामि 11 Ms. श्रोण:

द्वादशभिर्वर्षैस्त्वत्सकाशात् पानीयं पानीयमिति[1] शब्दः श्रुतः। स कथयति। के यूयं भवन्तः केन वा कर्मणा इहोपपन्नाः। [त ऊचुः]। श्रोण दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्धास्यन्ति। [स चाह]। अहं भवन्तः प्रत्यक्षदर्शी कस्मान्नाभिश्रद्धास्ये[2]। ते गाथां भाषन्ते।

आक्रोशका रो[षका वयं] मत्सरिणः कुट्टकुञ्चका वयम्।
दानञ्च न दत्तमण्वपि तेन वयं प्रेतलोकमागताः॥

श्रोण गच्छ पुण्यमहेशाख्यस्त्वम्[3]। अस्ति कश्चित्त्वया दृष्टः प्रेतनगरं प्रविष्टः स्वस्तिक्षेमाभ्यां निर्गच्छन्[4]। स संप्रस्थितः। यावत् तेनासौ पुरुषो दृष्टः। स तेनोक्तः। भद्रमुख अहो बत त्वया ममारोचितं स्याद् यथेदं प्रेतनगरमिति नाहमत्र प्रविष्टः स्याम्। स तेनोक्तः[5]। श्रोण गच्छ पुण्यमहेशाख्यस्त्वम्[3]। येन त्वं प्रेतनगरं प्रविश्य स्वस्तिक्षेमाभ्यां निर्गतः[4]।

स संप्रस्थितो यावदपरं पश्यत्यायसं नगरम् उच्चं च प्रगृहीतं च। तत्रापि द्वारे पुरुषस्तिष्ठति कालश्चण्डो लोहिताक्ष उद्बद्धपिण्डो[6] लोहलगुडव्यग्रहस्तः। स तस्य सकाशमुपसंक्रान्तः। उपसंक्रम्यैवमाह। भोः पुरुष अस्त्यत्र नगरे पानीयम्। स तूष्णीमवस्थितः। भूयस्तेन पृष्टः। भोः पुरुष अस्त्यत्र नगरे पानीयम्। स तूष्णीमवस्थितः। तेन तत्र प्रविश्य पानीयं पानीयमिति शब्दः कृतः। अनेकैः प्रेतसहस्रैर्दग्धस्थूणाकृतिभि-

1 Ms. omits तत् सकाशात् पानीयं
2 Ms. कथं न श्रद्धास्ये
3 Ms. पुण्यकर्मा त्वं
4 Ms. नगरं प्रविश्य जीवन् गच्छति।
5 Ms. स कथयति।
6 Ms. उद्बन्द्धपिण्डकायष्टिव्यग्रहस्तः।

रस्थियन्त्रवदुच्छ्रितैः स्वकेशरोमप्रतिच्छन्नैः पर्वतसन्निभोदरैः सूचीच्छिद्रोपममुखैरनुपरिवारितः। [ते कथयन्ति]। श्रोण कारुणिकस्त्वमस्माकं तृषार्तानां पानीयमनुप्रयच्छ। स कथयति। अहमपि भवन्तः पानीयमेव मृगयामि कुतोऽहं युष्माकं पानीयं ददामीति[1]। ते कथयन्ति। श्रोण प्रेतनगरमिदं कुतोऽत्र पानीयम्। अद्यास्माभिर्द्वादशभिर्वर्षैस्त्वत्सकाशात् पानीयं पानीयमिति शब्दः श्रुतः। स चाह। के यूयं भवन्तः केन वा कर्मणा इहोपपन्नाः। त ऊचुः। श्रोण दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्दधास्यन्ति। स चाह। अहं भवन्तः प्रत्यक्षदर्शी कस्मान्नाभिश्रद्दधास्ये। ते गाथां भाषन्ते।

आरोग्यमदेन मत्तका [2]यौवनभोगमदेन मत्तकाः।
दानं च न दत्तमण्वपि येन वयं [3]प्रेतलोकमागताः॥

श्रोण गच्छ पुण्यकर्मा त्वम्। अस्ति कश्चित्त्वया दृष्टः श्रुतः प्रेतनगरं प्रविश्य [स्वस्तिक्षेमाभ्यां] जीवन् निर्गच्छन्। स संप्रस्थितः। यावत् तेनासौ पुरुषो दृष्टः। स तेनोक्तः। भद्रमुख अहो वत यदि त्वया ममारोचितं स्याद् यथेदं प्रेतनगरमिति नैवाहमत्र प्रविष्टः स्याम्। स कथयति। श्रोण गच्छ पुण्यमहेशाख्यस्त्वम्। अस्ति कश्चित् त्वया दृष्टः श्रुतो वा प्रेतनगरं प्रविश्य [स्वस्तिक्षेमाभ्यां] जीवन् निर्गच्छन्।

1 Ms. दास्यामीति

2 D. ये घनभोग॰; Tib. 255b, l. 7: ཡང་ཆེ།

3 D. & Ms. पितृ; Tib. 256b, l. 7: ཡི་དྭགས།

स संप्रस्थितः। यावत् पश्यति सूर्यस्यास्तंगमनकाले विमानं चतस्रोऽप्सरसः[1] अभिरूपाः प्रासादिका दर्शनीयाः। एकश्च पुरुषोऽभिरूपो दर्शनीयः प्रासादिकः अङ्गदकुण्डलविचित्र-माल्याभरणानुलेपनस्ताभिः सार्धं क्रीडति रमते परिचारयति। स तैर्दूरत एव दृष्टः। ते तं प्रत्यवभाषितुमारब्धाः। स्वागतं श्रोण मासि तृषितो बुभुक्षितो वा। स संलक्षयति। नूनं देवोऽयं वा नागो वा यक्षो वा भविष्यति। आह च। आर्य तृषितोऽस्मि बुभुक्षितोऽस्मि। स तैः स्नापितो भोजितः। स तस्मिन् विमाने तावत् स्थितो यावत् सूर्यस्याभ्युद्गमनकाल-समयः। स तैरुक्तः। श्रोण अवतर आदीनवोऽत्र भविष्यति। सोऽवतीर्य एकान्ते प्रक्रम्यावस्थितः[2]। ततः पश्चात् सूर्यस्याभ्युद्-गमनकालसमये तद्विमानमन्तर्हितम्। ता अप्यप्सरसोऽन्तर्हिता-श्चत्वारः श्यामशवलाः कुक्कुराः प्रादुर्भूताः। तैस्तं पुरुषमवमूर्धकं पातयित्वा तावत् पृष्ठवंशान्युत्पाट्योत्पाट्य भक्षितानि यावत् सूर्यस्यास्तंगमनकालसमयः। ततः पश्चात् पुनरपि तद् विमानं प्रादुर्भूतं ता अप्सरसः प्रादुर्भूताः। स च पुरुषोऽभिरूपो दर्शनीय-प्रासादिकोऽङ्गदकुण्डलविचित्रमाल्याभरणानुलेपनस्ताभिः सार्धं क्रीडति रमते परिचारयति। स तेषां सकाशमुपसंक्रम्य कथयति। के यूयं केन च कर्मणा इहोपपन्नाः। [ते प्रोचुः]। श्रोण दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्दधास्यन्ति। स चाह। अहं प्रत्यक्ष-दर्शी कथं नाभिश्रद्दधास्ये। श्रोण अहं वासवग्रामके औरभ्रिकः

1 Ms. चत्वारोप्सरस०    2 D. एकान्ते व्यवस्थितः।

आसीत्[1] । उरभ्रान् प्रघात्य प्रघात्य मांसं विक्रीय विक्रीय जीविकां कल्पयामि । आर्यश्च महाकात्यायनो ममानुकम्पया आगत्य कथयति । भद्रमुख अनिष्टोऽस्य कर्मणः फलविपाकः । विरम त्वमस्मात् पापकाद् असद्धर्मात् । नाहं[1] तस्य वचनेन विरमामि । भूयो भूयः स मां विच्छन्दयति । भद्रमुखानिष्टोऽस्य कर्मणः फलविपाकः । विरम त्वमस्मात् पापकादसद्धर्मात् । तत्राप्यहं न प्रतिविरमामि । स मां पृच्छति[2] । भद्रमुख किं त्वमेतानुरभ्रान् दिवा प्रघातयस्याहोस्विद् रात्रौ । मयोक्तः । आर्य दिवा [प्रघातयामीति] । स कथयति । [भद्रमुख] रात्रौ शीलसमादानं किं न गृह्णासि । मया तस्यान्तिकाद् रात्रौ शीलसमादानं गृहीतम् । [यत् तद् रात्रौ शीलसमादानं गृहीतं] तस्य कर्मणो विपाकेन रात्रावेवंविधं दिव्यं सुखं प्रत्यनुभवामि । यन्मया दिवा उरभ्राः प्रघातितास्तस्य[3] कर्मणो विपाकेन दिवा एवंविधं दुःखं प्रत्यनुभवामि । गाथां च भाषते[4] ।

दिवसं परप्राणपीडको रात्रौ शीलगुणैः समन्वितः ।
तस्यैतत् कर्मणः फलं ह्यनुभवामि कल्याणपापकम् ॥

श्रोण गमिष्यसि त्वं वासवग्रामकम्[5] । गमिष्यामि । तत्र मम पुत्रः प्रतिवसति । स उरभ्रान् प्रघात्य प्रघात्य जीविकां कल्पयति । स त्वया वक्तव्यः[5] दृष्टस्ते मया पिता । स कथयति । अनिष्टोऽस्य कर्मणः फलविपाको विरमास्मात्

1 For आसम्    1 Ms. सोऽहं    2 Ms. मां पृष्टुमारब्धः
3 Ms. यत्तु दिवा उरभ्रान् प्रघातितवान् तस्य    4 Ms. गाथा च प्रत्यनुभाषत ।
5 Ms. [illegible]

पापकादसद्धर्मात्। भोः पुरुष यत् त्वमेवं कथयसि दुष्कुहका जम्बुद्वीपका मनुष्या इति। नाभिश्रद्दधास्यति। श्रोण यदि न श्रद्दधास्यति वक्तव्यस्तव पिता कथयति असिस्थानाधस्तात्[1] सुवर्णस्य कलशः पूरयित्वा स्थापितः। तमुद्धृत्यात्मानं सम्यक् सुखेन प्रीणय आर्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादयास्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं[2] गच्छेत्।

स संप्रस्थितः। यावत् सूर्यस्याभ्युद्गमनकालसमये पश्यत्यपरं विमानम्। तत्र एका अप्सरा अभिरूपा दर्शनीया प्रासादिका। एकश्च पुरुषः अभिरूपो दर्शनीयः प्रासादिकः अङ्गद-कुण्डलविचित्रमाल्याभरणानुलेपनस्तया सार्धं क्रीडति रमते परिचारयति। स तं दूरत एव दृष्ट्वा प्रत्यवभाषितुमारब्धः। स्वागतं श्रोण मा तृषितोऽसि मा बुभुक्षितोऽसि वा। स संलक्षयति। नूनमयं देवो वा नागो वा यक्षो वा भविष्यति। स कथयति। तृषितोऽस्मि बुभुक्षितश्च। स ताभ्यां[3] स्नापितो भोजितः। स तस्मिन् विमाने तावत् स्थितः यावत् सूर्यस्यास्तंगमनकालसमयः[4]। स ताभ्यामुक्तः। श्रोण अवतरस्वादीनवोऽत्र भविष्यति। स दृष्टादीनवोऽवतीर्य एकान्तेऽवस्थितः। ततः पश्चात् सूर्यस्यास्तंगमनकालसमये[4] तद् विमानमन्तर्हितम्। साप्यप्सरा

1 D. असिसूनाधस्तात, Ms. पित्रोस्य सूनायामधस्तात्; Tib. 258h. 1. 3: རལ་གྲིས་བསད་པའི་སའི་འོག་ན། असिवध्यस्थानाधस्तात्।

2 Ms. पर्याधानं 3 D. तेन 4 M- सूर्यस्यावतरणकालसमयः

अन्तर्हिता। महती शतपदी प्रादुर्भूता। तया तस्य पुरुषस्य कायेन कायं सप्तकृत्वो वेष्टयित्वा तावदुपरिमस्तकं भक्षितं यावत्[1] स एव सूर्यस्याभ्युद्गमनकालसमयः। ततः पश्चात् पुनरपि तद् विमानं प्रादुर्भूतम्। साप्यप्सरा प्रादुर्भूता। स च पुरुषोऽभिरूपो दर्शनीयः प्रासादिकः अंगदकुण्डलविचित्र-माल्याभरणानुलेपनस्तया सार्धं क्रीडति रमते परिचार-यति। स तमुपसंक्रम्य पृच्छति[2]। को भवान् केन कर्मणा इहोपपन्नः। स एवमाह। श्रोण दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्दधास्यन्ति। स कथयति। अहं प्रत्यक्षदर्शी कस्मान्नाभिश्रद्दधास्ये[3]। स कथयति। अहं[4] वासवग्रामके ब्राह्मण आसीत्[5] पारदारिकः। आर्यश्च महाकात्यायनो ममानु-कम्पयागत्य कथयति। भद्रमुखानिष्टोऽस्य कर्मणः फलविपाको विरम[6] त्वमस्मात् पापकाद् असद्धर्मात्। तस्य वचनेनाहं[7] न प्रति-विरमामि। भूयो भूयः स मां विच्छन्दयति। भद्रमुख अनिष्टोऽस्य कर्मणः फलविपाकः विरमास्मात्पापकादसद्धर्मात्। तथाप्यहं[8] तस्मात् पापकादसद्धर्मान्न प्रतिविरमामि। स मां पृच्छति[9]। भद्रमुख परदारान् किं त्वं दिवा गच्छस्याहोस्विद् रात्रौ। स मया अभिहितः[10]। आर्य रात्रौ। स कथयति। भद्रमुख दिवा किं न शीलसमादानं गृह्णासि। मया तस्यान्तिके दिवा शीलसमादानं

1 D. भक्षयन्ति स्थिता यावत्

2 Ms. स तस्य सकाशमुपसंक्रान्तः। 3 Ms. ०श्रद्धास्ये 4 D. यद्येवमहं

5 For आसम् 6 Ms. omits त्वम् 7 D. वचनादहं

8 D. तथैवाहं 9 Ms. स मां पृष्टुमारब्धः। 10 Ms. मयोक्तः

गृहीतम्। यत् तन्मयार्यस्य [महा]कात्यायनस्यान्तिकाद् दिवा शीलसमादानं गृहीतं तस्य कर्मणो विपाकेन दिवा एवंविधं दिव्यं सुखं प्रत्यनुभवामि यत् तद् रात्रौ परदाराभिगमनं कृतं[1] तस्य कर्मणो विपाकेन रात्रावेवंविधं दुःखं प्रत्यनुभवामि। गाथां च भाषते।

रात्रौ परदारमूर्छितो दिवसं शीलगुणैः समन्वितः।
तस्यैतत् कर्मणः फलं ह्यनुभवामि कल्याणपापकम्॥

श्रोण गमिष्यसि त्वं वासवग्रामकम्। तत्र मम पुत्रो ब्राह्मणः पारदारिकः। स वक्तव्यः। दृष्टस्ते मया पिता। स कथयति अनिष्टोऽस्य कर्मणः फलविपाको विरमास्मात् पापकादसद्धर्मात्। [सचाह]। भोः पुरुष त्वमेवं कथयसि। दुष्कुहका जम्बुद्वीपका मनुष्या इति। नाभिश्रद्दधास्यति[2]। श्रोण यदि न[3] श्रद्दधास्यति वक्तव्यः तव पित्राग्निष्टोमस्याधस्तात् सुवर्णकलशः पूरयित्वा स्थापितः। तमुद्धृत्यात्मानं सम्यक् सुखेन प्रीणय आर्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादय अस्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्।

स संप्रस्थितः। यावत् पश्यति अपरं विमानम्। तत्रैका स्त्री अभिरूपा दर्शनीया प्रासादिका अङ्गदकुण्डलविचित्रमाल्याभरणानुलेपना। तस्याश्चतुर्षु पर्यङ्कपादकेषु चत्वारः प्रेता बद्धास्तिष्ठन्ति। सा तं दूरत एव दृष्ट्वा प्रत्यनुभाषितुमारब्धा। श्रोण स्वागतं मा

1 Ms. कृतवान्

2 D. एतन्मे कः श्रद्दधास्यति

3 D. यन्न

तृषितोऽसि मा बुभुक्षितोऽसि वा। स संलक्षयति। नूनं देवीयं वा नागी वा यक्षी वा भविष्यति। स कथयति। आर्ये[1] तृषितोऽस्मि बुभुक्षितोऽस्मि। तयासौ स्नापितः भोजितः[2] उक्तश्च। श्रोण यद्येते किञ्चिन्मृगयन्ति मा दास्यसीत्युक्त्वा तेषां सत्त्वानां कर्म स्वकृतं[3] प्रत्यक्षीकर्तुकामा विमानं प्रविश्यावस्थिता। ते मृगयितुमारब्धाः। श्रोण कारुणिकस्त्वं बुभुक्षिता वयमस्माकमनुप्रयच्छ। तैनैकस्य क्षिप्तं[4] बुसप्लावी प्रादुर्भूता। अपरस्य [क्षिप्त]मयोगुडं[5] भक्षयितुमारब्धः। अपरस्य क्षिप्तं स्वमांसं भक्षयितुमारब्धः। अपरस्य क्षिप्तं पूयशोणितं प्रादुर्भूतम्। सा पश्यति[6] विस्रगन्धेन निर्गतम्[7]। श्रोण निवारितस्त्वं मया कस्मात् त्वयैषां दत्तम्। किं मम करुणया त्वमेव कारुणिकतरः। स कथयति। भगिनि तवैते के भवन्ति। सा कथयति। अयं मे स्वामी। अयं मे पुत्रः। इयं मे स्नुषा। इयं मे दासी। [स आह]। के यूयं केन वा कर्मणा इहोपपन्नाः। तयोक्तम्। श्रोण दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्धास्यन्ति। अहं भगिनि प्रत्यक्षदर्शी

1 Ms. आम

2 D. तयासावुद्वर्तितः स्नापित आहारो दत्तः।

3 Ms. कर्मश्चकृतां Tib. 259b, l. 4: ལས་བདག་གིར་བྱ་བ །

4 Ms. क्षिप्रं; Tib. 259b, l. 4: སྦུབ་མར་གྱུར་ཏོ །=A small particle (given by him) turned into a chaff.

5 Tib. 259b, l. 5: ཡང་གཅིག་ལ་ཁམ་གཅིག་བྱིན་མ་དང་ལྕགས་ཀྱི་ཐུ་ལུམ་ཟ་བར་གྱུར་ཏོ །

6 D. omits पश्यति

7 Ms. सा पश्यति गन्धेन निर्गतः।

न्नाभिश्रद्दधास्ये। सा कथयति। अहं वासवग्रामके ब्राह्मण्यासीत्। मया नक्षत्ररात्रौ[1] प्रत्युपस्थितायां प्रणीतमाहारं सज्जीकृतम्। आर्यश्च महाकात्यायनो ममानुकम्पया वासवग्रामकं पिण्डाय प्राविक्षत्। स मया दृष्टः कायप्रासादिकश्चित्तप्रासादिकः। चित्तमभिप्रसन्नं दृष्ट्वा स मया प्रसादजातया पिण्डकेन प्रतिपादितः[2]। तस्या मम बुद्धिरुत्पन्ना स्वामिनमनुमोदयामि प्रामोद्यमुत्पादयिष्यतीति। स स्नात्वा आगतो मयोक्तः। आर्यपुत्रानुमोदस्व[3] मयार्यो महाकात्यायनः पिण्डकेन प्रतिपादितः। स रुषितो यावद् ब्राह्मणानां न दीयते ज्ञातीनां वा ज्ञातिपूजा न क्रियते तावत् त्वया तस्मै मुण्डकाय [4]श्रमणकायाग्रपिण्डकं दत्तम्। सोऽमर्ष[5]जातः कथयति। कस्मात् स मुण्डकः श्रमणको वुसप्लावीं[6] न भक्षयतीति। तस्य कर्मणो विपाकेनायं वुसप्लावीं भक्षयति। मम बुद्धिरुत्पन्ना [7]पुत्रं तावदनुमोदयामि। [8]प्रामोद्यमुत्पादयिष्यतीति। सोऽपि मयोक्तः। पुत्रानुमोदस्व[9] मयार्यो महाकात्यायनः पिण्डकेन प्रतिपादितः। सोऽपि रुषितो यावद् ब्राह्मणानां न दीयते ज्ञातीनां वा ज्ञातिपूजा न क्रियते तावत् त्वया तस्मै मुण्डकाय श्रमणकायाग्रपिण्डं दत्तम्। सोऽप्यमर्षजातः कथयति। कस्मात् स मुण्डकः श्रमणकोऽयोगुडं न भक्षयतीति। तस्य

1 D. ०रात्र्याम्
2 Ms. प्रत्युपादितः
3 Ms. ०नुमोदय
4 Ms. श्रमणाग्र०
5 Ms. सोऽप्यम०
6 Ms. प्लाविं
7 D. पुत्रमप्यनु०
8 Ms. प्रामोदि०
9 Ms. ०नुमोद

कर्मणो विपाकेनायमयोगुडं भक्षयति। नक्षत्ररात्र्यां प्रत्युपस्थितायां ज्ञातयः प्रहेणकानि मम प्रेषयन्ति। तान्यहं स्नुषायाः समर्पयामि। सा प्रणीतानि प्रहेणकानि भक्षयित्वा मम लूहानि उपनामयति। अहं तेषां ज्ञातीनां सन्दिशामि। किंनु यूयं दुर्भिक्षे यथा लूहानि प्रहेणकानि प्रेषयथेति। ते मम सन्दिशन्ति। न वयं लूहानि प्रेषयामः अपि तु प्रणीतान्येव प्रहेणकानि प्रेषयामः। मया स्नुषाभिहिता। वधूके मा त्वं प्रणीतानि प्रहेणकानि भक्षयित्वास्माकं लूहान्युपनामयसि[1]। सा कथयति। किं न स्व[मांसानि भक्षयति याहं त्वदीयानि प्रहेणकानि भक्षयामीति[2]। इयं तस्य कर्मणो विपाकेन स्वमांसानि भक्षयति। नक्षत्ररात्र्यां[3] प्रत्युपस्थितायामहं दारिकाया हस्ते प्रणीतानि प्रहेणकानि दत्त्वा ज्ञातीनां प्रेषयामि। सा [दारिका तानि] प्रणीतानि प्रहेणकानि मागऽन्तर्भक्षयित्वा तेषां लूहान्युपनामयति। ते मम सन्दिशन्ति। किंनु त्वं दुर्भिक्षे यथा लूहान्यस्माकं प्रहेणकानि प्रेषयसीति। अहं तेषां सन्दिशामि। नाहं लूहानि प्रहेणकानि प्रेषयामि अपितु प्रणीतान्येवाहं प्रेषयामीति। मया दारिकाभिहिता। दारिके मा त्वं प्रणीतानि प्रहेणकानि भक्षयित्वा तेषां लूहान्युपनामयसि। सा कथयति। किंनु पूयशोणितं न भक्षयति या त्वदीयानि प्रहेणकानि भक्षयतीति। तस्य कर्मणो विपाकेनेयं पूयशोणितं भक्षयति। मम बुद्धिरुत्पन्ना। तत्र

1 Ms. ०नुप्रयच्छसि

2 D. किं स्वमांसं न भक्षयति या त्वदीयानि प्रहेणकानि भक्षयतीति।

3 Ms ०रात्रौ

प्रतिसन्धिं गृह्णामि[1] यत्रैतान् सत्त्वान् स्वकं स्वकं कर्मफलं परिभुञ्जानान्[2] पश्यामीति[3]। यन्मयार्यमहाकात्यायनं पिण्डकेन प्रतिपाद्य प्रणीते त्रयस्त्रिंशे देवनिकाये उपपत्तव्यं साहं मिथ्याप्रणिधानं कृत्वा[4] प्रेतमहर्द्धिका[5] संवृत्ता।

श्रोण गमिष्यसि त्वं वासवग्रामकं तत्र मम दुहिता वेश्यां वाहयति। सा त्वया [वक्तव्या। दृष्टास्ते मया पिता माता भ्राता भ्रातुर्जाया दासी। ते कथयन्ति। अनिष्टोऽस्य कर्मणः फलवि]पाको विरमास्मात् पापकादसद्धर्मात्। भगिनि त्वमेव कथयसि दुष्कुहका जम्बुद्वीपका मनुष्या नाभिश्रद्धास्यन्ति। श्रोण यदि न श्रद्धास्यति वक्तव्या तव पौराणे पैत्रिके [वासगृहे चत्वारो लोहसंघाटाः सुवर्णस्य पूर्णास्तिष्ठन्ति मध्ये च सौवर्णदण्डकमण्डलुः। ते कथ]यन्ति तमुद्धृत्यात्मानं सम्यक्सुखेन प्रीणय आर्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादय अस्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् [कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। तेन तस्याः प्रतिज्ञातम्।

एवं तस्य परिभ्रमतो द्वादश वर्षा अतिक्रान्ताः]। तयोक्तः। श्रोण गमिष्यसि त्वं वासवग्रामकम्। भगिनि गमिष्यामि। स तस्मिन्नेव विमाने अधिरूढः[6]। तया तेषामेव प्रेतानामाज्ञा

1 D. गृह्णीयां
2 Ms. प्रत्युनुभवमानान्
3 Ms. पश्येयमिति
4 D. ०नवशात्
5 Ms. मरिका
6 D. उषितः

दत्ता भवन्तो गच्छत श्रोणं [कोटीकर्णं सुप्तमेव वासवग्रामके पैत्रिके उद्याने स्थापयित्वा आगच्छत। स तैर्वासवग्रामके पैत्रिके] उद्याने स्थापितः। स प्रतिविबुद्धो यावत् पश्यति घण्टाच्छत्राणि व्यजनान्यक्षराणि लिखितानि। यदि तावच्छ्रोणः कोटीकर्णो जीवति [लघ्वागमनाय क्षिप्रमागमनाय च्युतः कालगतो गत्युपपत्तिस्थानात् स्थानान्तरविशेषतायै। स संलक्षयति। यद्यहं मातापितृभ्यां] मृत एव गृहीतः कस्माद् भूयोऽहं गृहं प्रविशामि गच्छाम्यार्य महाकात्यायनस्यान्तिके प्रव्रजामीति। अथ श्रोणः कोटीकर्णो येना[युष्मान् महाकात्यायनस्तेनोपसंक्रान्तः। अद्राक्षीदायुष्मान् महाकात्यायनः श्रोणं कोटीकर्णम्। दूरादेव दृष्ट्वा च] पुनः श्रोणं कोटीकर्णमिदमवोचत्। एहि श्रोण स्वागतं ते दृष्टस्ते श्रोण अयं लोकः परश्च लोकः। स कथयति। दृष्टो भदन्त महाकात्यायन [लभेयाहं भदन्त महाकात्यायन स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयम]हं भगवतोऽन्तिके ब्रह्मचर्यम्। [स आर्येणोक्तः।] श्रोण [1]तां तावत् पूर्विकां प्रतिज्ञां परिपूरय[2] यथागृहीतान् सन्देशान् समर्पयेति।

स तस्यौरभ्रिकस्य सकाशमुपसंक्रान्तः। भद्र[मुख दृष्टस्ते पिता मया। स कथयति अनिष्टोऽस्य कर्मणः फलविपाको विरमास्मात् [पापकाद]सद्धर्मात्। भोः] पुरुष अद्य मम पितुर्द्वादश वर्षाणि कालगतस्य। अस्ति कश्चिद् दृष्टः परलोकात्

1 Ms. तत्  2 Ms. स्मर पूरय

पुनरागच्छन्। भद्रमुख एषोऽहमागतः। नासौ श्रद्दधाति[1]। [भद्रमुख यदि न श्रद्दधासि स तव पिता कथयति [2]असिस्थानाधस्तात् सुवर्णस्य कलशः पूर्णस्तिष्ठति। तमुद्धृत्या]त्मानं सम्यक् सुखेन प्रीणय आर्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादयास्माकं च नाम्ना दक्षिणामादेशय। अ[प्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत्। स संलक्षयति। न क]दाचिदेवं मया श्रुतपूर्वं पश्यामि स चेद् भूतं भविष्यति सर्वमेतत् सत्यम्। तेन गत्वा खनितं यावत् तत् सर्वं तत् तथैव तेनाभिश्रद्दधीतम्[3]।

ततः पश्चात् स[4] पारदारिकस्य सकाशमुपसंक्रान्तः। [उपसंक्रम्य कथयति। भद्रमुख दृष्टस्ते मया पिता। स कथयति। अनिष्टोऽस्य कर्मणः फलविपाको विरमास्मात् पापकादसद्धर्मात्। स क]थयति। भोः पुरुष अद्य मम पितुर्द्वादश वर्षाणि कालं गतस्य। अस्ति कश्चित् त्वया दृष्टः परलोकं गत्वा पुनरागच्छन्। भद्रमुख एषोऽहमागतः। नासौ श्रद्दधाति। स कथयति[5]। [भद्रमुख स चेन्नाभिश्रद्दधासि तव पित्राग्निष्टोमस्याधस्तात् सुवर्णस्य कलशः पूरयित्वा स्थापितः। स कथयति। तमु]द्धृत्यात्मानं सम्यक् सुखेन प्रीणयार्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादयास्माकं च नाम्ना दक्षिणामादेशय। अप्येवैतत् कर्म तनुत्वं [परिक्षयं पर्यादानं गच्छेत्। स संलक्षयति। न कदाचिदेतन्मया श्रुतपूर्वं पश्यामि स चेद् भूतं भविष्यति सर्वमे]तत् सत्यम्। तेन

1 Ms. ०धास्यति
2 See above, p. 173
3 Ms. श्रद्धातम्।
4 Ms. तस्य
5 D. चाह

गत्वा खनितं यावत् पश्यति तत्सर्वं तत् तथैव तेनाभिश्रद्दधीतम् ।

स गणिकायाः[1] सकाशमुपसंक्रान्तः । [उपसंक्रम्य कथयति । ] भगिनि दृष्टस्ते मया माता पिता भ्रातु[र्जाया दासी । ते कथयन्ति । अनिष्टोऽस्य कर्मणः फलविपाको विरमास्मात् पापकादसद्धर्मात् । सा कथयति । भोः पुरु]ष अद्य मम मातापित्रोर्द्वादश वर्षाणि कालगतयोः । अस्ति कश्चित् त्वया दृष्टः परलोकं गत्वा पुनरागच्छन् । स कथयति । एषोऽहमागतः । सा न श्रद्दधाति । [स कथयति । भगिनि स चेन्नाभिश्रद्दधासि तव पौराणे पैत्रिके वासगृहे चत्वारो लोहसंघा]टाः सुवर्णपूर्णास्तिष्ठन्ति । मध्ये च सौवर्णदण्डकमण्डलुः । ते कथयन्ति । तमुद्धृत्यात्मानं सम्यक् सुखेन प्रीणयार्यं च महाकात्यायनं कालेन कालं पिण्डकेन प्रतिपादयास्माकं च नाम्ना दक्षिणामादेशय । अ[प्येवैतत् कर्म तनुत्वं परिक्षयं पर्यादानं गच्छेत् । ] सा संलक्षयति । न कदाचिन्मया श्रुतपूर्वं पश्यामि स चेद् भूतं भविष्यति सर्वमेतत् सत्यम् । तया गत्वा खनितं यावत् तत्सर्वं तत् तथैव तयाभिश्रद्दधीतम् ।

[श्रोणः कोटीकर्णः संलक्षयति । सर्वोऽयं लोकः सुवर्णस्य श्रद्दधाति न तु कश्चिन्मम श्रद्धया गच्छतीति । तेन वैपु]ष्पितम्[2] । तस्य[3] शिशुत्वे सुवर्णेन दशना बद्धाः[4] । तयासौ प्रत्यभिज्ञातः । स्यादार्यः श्रोणः कोटीकर्णः एव मे

1 D. तस्या वेश्यायाः

2 Tib. 262 b, l. 7: འཛུམ་བྱུང་བ । =स्मितम्

4 D. omits तस्य 3 D. inserts महात्मा तस्य शब्देन सर्वं गृहमापूरितम् । स

[भगिनि] संजानीते[1] । तया [गत्वा] तस्य मातापितृभ्यामारोचितम् । अम्ब तात कोटीकर्णोऽ[भ्यागत इति । अनेकैस्तेषामारोचितम् । ते न कस्यचित् श्रद्धया गच्छन्ति । ते कथयन्ति । पुत्रि त्वमप्यस्माकमुत्प्रासयसि[2] । यावदसौ स्वयमेव गतः । तेन द्वारकोष्ठके स्थित्वोत्काशनशब्दः कृतः । ] हिरण्यस्वरोऽसौ[3]। स तैः स्वरेण प्रत्यभिज्ञातः । तौ[4] कण्ठे परिष्वज्य रुदितुमारब्धौ । तेषां वाष्पेण पटहानि स्फुटितानि । द्रष्टुमारब्धौ । स कथयति । अम्ब तातानुजानीध्वं प्रव्रजिष्यामि [सम्यगेव श्रद्धया अगाराद् अनागारिकम् । तौ कथयतः । पुत्रावां त्वदीयेन शोकेन रुदन्तावन्धीभूतौ । ] इदानीं त्वम् एवागम्य चक्षुः प्रतिलब्धम् । यावदावां जीवावस्तावन्न प्रव्रजितव्यम् । यदा कालं करिष्यावस्तदा प्रव्रजिष्यसि । तेनायुष्मतो महाकात्यायनस्यान्तिकाद् धर्मं श्रुत्वा स्रो]त-आपत्तिफलं साक्षात्कृतं मातापितरौ च शरणागमनशिक्षापदेषु प्रतिष्ठापितौ । आगमचतुष्टयमधीतम् । सकृदागामिफलं साक्षात् कृतम् । मातापितरौ सत्येषु प्रतिष्ठापितौ[5]। अपरेण समयेन तस्य मातापितरौ कालगतौ । स तं धनजातं दीनानाथकृपणवनीपकेभ्यो दत्त्वा दरिद्रान् अदरिद्रान् कृत्वा येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्तः । उपसंक्रम्यायुष्मतो महाकात्यायनस्य पादौ शिरसा वन्दित्वा एकान्तेऽस्थात् । एकान्ते स्थितः श्रोणः

1 D. भगिनीजनः संजानते 2 Tib. 263a, l. 1: སྙན་པ =announce.

3 The Tib. version may be retranslated thus: अभ्यागत इति । इति ते न श्रद्दधन्ति । यावदसौ 4 Ms. ते ।

5 Ms. adds here अभिधर्ममधीतम् । अनागामिफलं साक्षात्कृतम् । तस्य कालान्तरेण मातापितरौ कालगतौ । स तं

कोटीकर्णः आयुष्मन्तं महाकात्यायनमिदमवोचत् । लभेयाहमार्य महाकात्यायन स्वाख्याते धर्मविनये प्रव्रज्यामुपसम्पदं भिक्षुभावम् । यावच्चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यम् । स आयुष्मता महाकात्यायनेन प्रव्राजितः । तेन प्रव्रज्य मातृकाधीता । अनागामिफलं साक्षात्कृतम् ।

अश्मापरान्तकेषु[1] जनपदेषु अल्पभिक्षुकं कृच्छ्रेण दशवर्गो गणः परिपूरयते । स त्रैमासीं श्रामणेरो विधारितः । धर्मता खलु यथा बुद्धानां भगवतां श्रावकाणां द्वौ संनिपातौ भवतः । यश्चाषाढ्यां वर्षोपनायिकायां यश्च कार्तिक्यां पौर्णमास्याम् । तत्र ये आषाढ्यां वर्षोपनायिकायां संनिपतन्ति ते तांस्तान् उद्देश-योग-मनसिकारान्[2] उद्गृह्य पर्यवाप्य तासु तासु ग्रामनगरनिगमराष्ट्रराजधानीषु वर्षामुपगच्छन्ति । ये कार्तिक्यां पौर्णमास्यां संनिपतन्ति ते यथाधिगतमारोचयन्ति । उत्तरे च परिपृच्छन्ति[3] । एवमेव महाश्रावकाणामपि । अथ ये आयुष्मतो महाकात्यायनस्य सार्धंविहार्यन्तेवासिका भिक्षवस्तांस्तान् उद्देशयोगमनसिकारविशेषानुद्गृह्य पर्यवाप्य तासु तासु ग्रामनगरनिगमराष्ट्रराजधानीषु वर्षामुपगतास्ते त्रयाणां वार्षिकाणां मासानामत्ययात् कृतचीवरा निष्ठितचीवराः समादाय पात्रचीवरं येनायुष्मान् महाकात्यायनस्तेनोपसंक्रान्ताः । उपसंक्रम्यायुष्मतो महाकात्यायनस्य पादौ शिरसा वन्दित्वैकान्ते

1 Ms. अश्मापरान्तकेष्वल्पभिक्षुकं 2 Ms. संनिपतन्ति तेषां मनसिकारः
3 D. adds सूत्रस्य विनयस्य मातृकायाः ।

निषण्णाः। एकान्ते निषद्य यथाधिगतमारोचयन्ति उत्तरे च परिपृच्छन्ति। दशवर्गो गणः परिपूर्णः। स तेनोपसंपादितः। तेन पिटकत्रयमधीतम्[1]। सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तस्त्रैधातुकवीतरागो [समलोष्ट्र]कांचनः आकाशपाणितल[सम]चित्तो वासीचन्दनकल्पोऽविद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः [सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो]ऽभिवाद्यश्च संवृत्तः[2]।

अथायुष्मतो महाकात्यायनस्य सार्धंविहार्यन्तेवासिका आयुष्मन्तं महाकात्यायनं यावत् तावत् पर्युपास्यायुष्मन्तं महाकात्यायनमिदमवोचन्। दृष्टोऽस्माभिरुपाध्याय पर्युपासितश्च। गच्छामो वयं भगवन्तं पर्युपासिष्यामहे[3]। वत्स एवं कुरुध्वम्[4]। पर्युपासितव्या एव हि तथागता अर्हन्तः सम्यक्संबुद्धाः।

तेन खलु [पुनः समयेन श्रोणः कोटीकर्णस्तस्यामेव पर्षदि संनिषण्णोऽभूत् संनिपतितः। अथायुष्मान् श्रोणः कोटीकर्ण उत्थायासनादेकांसमुत्तरा]संगं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य [येनायुष्मान् महाकात्यायनस्तेनाञ्जलिं कृत्वा प्रणम्या]युष्मन्तं महाकात्यायनमिदमवोचत्। दृष्टो मयोपाध्यायानुभावेन[5] स भगवान् धर्मकायेन नो तु रूपकायेन। [गच्छाम्युपाध्याय रूपकायेनापि तं भगवन्तं द्रक्ष्यामि। स आह। एवं वत्स

1 D. तृतीयपिटकधीतम्।

2 Cf. Gilgit Mss. Vol. III, pt. ii, p. 131; D. pp. 97, 282.

3 D. adds स चाह।

4 D. adds द्रष्टव्या एव।

5 Ms. omits अनुभावेन

कुरुष्व। दुर्लभदर्शना हि वत्स तथागता अर्हन्तः] सम्यक्संबुद्धाः तद्यथा औदुम्बरपुष्पम्[1]। अस्माकं च [वचनेन भगवतः पादौ शिरसा वन्दस्वाल्पाबाधतां[2] च यावत् सुखस्पर्शविहारतां च पञ्च प्रश्नानि च पृच्छ।

[3]अश्मापरान्तकेषु भदन्त जनपदेषु अल्पभिक्षुकं कृच्छ्रेण दशवर्गगणः परिपूर्यते। तत्रास्माभिः कथं प्रतिपत्तव्यम्। खरा भूमिर्गोकण्टकाधाना[4]। अश्मापरान्तकेषु जनपदेषु इदमेवंरूप[मास्तरणं] प्रत्यास्तरणं तद्[यथा अजचर्म[5] गोचर्म मृगचर्म च्छागचर्म। तदन्येषु जनपदेष्विदमेवंरूपमास्तरणं[6] प्रत्यास्तरणं तद्यथा एरको मेरको जन्दुरको मन्दुरकः[7]। एवमेवाश्मापरान्तकेषु जनपदेष्विदमेवंरूपमास्तरणं [प्रत्यास्तरणं]

1 Ms. उदुम्बरे पुष्पम्।

2 The usual full expression is अल्पाबाधतामल्पातंकतां यात्रां लघूत्थानतां बलं च सुखस्पर्शविहारतां च।

3 Tib. 264b, l. 2: རྡོ་ཅན་ཞེས་བགྱི་བའི་ཡུལ་གྱི་མཐའ་ན །=अश्मापरान्तकेषु। D. reads throughout अस्मात् परान्तकेषु।

4 Ms. खरा भदन्त भूमि कराटकाधानाः; cf. *Mahāvagga*, I, p. 193: कराहुत्तरा भुमि खरा गोकराटकाहता।

5 Ms. & D. अविचर्म; Tib. 264b. l. 3: ལུག་གི་པགས་པ་དང ། =एडकचर्म, मेषचर्म। Cf. *Mahāvagga*, I, p. 196: एड्कचम्मं अजचम्मं मिगचम्मं।

6 Ms. omits आस्तरणं

7 Tib. 264b, l. 4-5: བལ་སྟན་དང ། ཤིང་ཤུན་གྱི་སྟན་དང ། སྤྲེན་བལ་གྱི་སྟན་དང ། རས་བལ་གྱི་དག་མཆིས་པ ། =Sans. कोचव-वल्कल-कच-कार्पासिक; cf. *Mahāvagga*, I, p. 196: सेय्यथापि भन्ते मज्झिमेसु जनपदेसु एरगु मोरगु मज्झारु जन्तु।

तद्यथा अजचर्म पूर्ववत्। उदकशुद्धिका[1] मनुष्या स्नानसमुदा[2]-चाराः। भिक्षुर्भिक्षोश्चीवरकाणि प्रेषयति। इतश्च्युतानि[3] तत्र-संप्राप्तानि। कस्यैतानि नैसर्गिकाणि[4]। अधिवासयत्यायुष्मान् श्रोणः कोटीकर्ण आयुष्मतो महाकात्यायनस्य तूष्णींभावेन।

अथायुष्मान् श्रोणः कोटीकर्णस्तस्या एव रात्रेरत्ययात् पूर्वाह्णे निवास्य पात्रचीवरमादाय वासवग्रामकं पिण्डाय प्राविक्षत्। यावदनुपूर्वेण श्रावस्तीमनुप्राप्तः। अथायुष्मान् श्रोणः कोटी-कर्णः पात्रचीवरं प्रतिशामय्य[5] पादौ प्रक्षाल्य येन भगवांस्तेनोप-संक्रान्तः। उपसंक्रम्य वन्दित्वैकान्ते निषण्णः। तत्र भगवानायुष्मन्त-मानन्दमामन्त्रयते स्म। गच्छानन्द तथागतस्य श्रोणस्य च कोटीकर्णस्यैकविहारे मञ्चं प्रज्ञपय। एवं भदन्तेत्यायुष्माना-नन्दस्तथागतस्य श्रोणस्य च कोटीकर्णस्य यावत् प्रज्ञप्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्। प्रज्ञप्तो भदन्त तथागतस्य श्रोणस्य च कोटीकर्णस्यैकविहारे मञ्चो यस्येदानीं भगवान् कालं मन्यते। अथ भगवान् येन श्रोणस्य कोटीकर्णस्य विहारस्तेनोपसंक्रान्तो [यावद्] विहारं प्रविश्य निषण्णः। यावत्[6]

1 D. उदकस्तब्धिका

2 D. स्नातोपविचाराः। Cf. *Mahāvagga*, I, p. 196: अवन्तिदक्खिणापथे भन्ते नहानगरुका मनुस्सा उदकसुद्धिका। अप्पेव नाम भगवा अवन्तिदक्खिणापथे धुवनहानमनुजानेय्य।

3 च्युतानि is used in the sense of प्रेषितानि।

4 Cf. *Mahāvagga*, I, p. 196: एतरहि भन्ते मनुस्सा निस्सीमगतानं भिक्खूनं चीवरं देन्ति। इमं चीवरं इत्थन्नामस्स देथा'ति। ते आगन्त्वा आरोचेन्ति। इत्थन्नामेहि ते आवुसो मनुस्सेहि चीवरं दिन्नं ति। ते कुक्कुच्चायन्ता न सादियन्ति। मा नो निस्सग्गियं अहोसीति।

5 Ms. प्रतिशम्य

6 D. adds पश्यति

प्रतिमुखं स्मृतिमुपस्थाप्य। अथायुष्मानपि श्रोणः कोटीकर्णो बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्रविश्य निषण्णः पर्यङ्कमाभुज्य यावद् ऋजुकायं प्रणिधाय प्रतिमुखं स्मृतिमुपस्थाप्य। तां खलु रात्रिं भगवानायुष्मांश्च श्रोणः कोटीकर्ण आर्यस्य[1] तूष्णींभावेनातिनामितवान्[2]। अथ भगवान् रात्र्याः प्रत्यूषसमये आयुष्मन्तं श्रोणं कोटीकर्णमामन्त्रयते स्म। प्रतिभातु ते श्रोण धर्मो यो मया स्वयमभिज्ञायाभिसंबुध्याख्यातः। अथायुष्मान् श्रोणो भगवता कृतावकाशः अश्मापरान्तिकया [3]स्वरगुप्तिकया उदानात् पारायणात् सत्यदृष्टः[4] शैलगाथा-मुनिगाथा-स्थविरगाथा[5]-स्थविरीगाथार्थ[5]-वर्गीयाणि[6] च सूत्राणि विस्तरेण स्वरेण स्वाध्यायं करोति। अथ भगवान् श्रोणस्य कोटीकर्णस्य कथापर्यवसानं विदित्वा आयुष्मन्तं श्रोणं कोटीकर्णमिदमवोचत्। साधु साधु श्रोण मधुरस्ते धर्मो भाषितः प्रणीतश्च यो मया स्वयमभिज्ञायाभिसंबुध्याख्यातः।

अथायुष्मतः श्रोणस्य कोटीकर्णस्यैतदभवत्। अयं मे कालो भगवत उपाध्यायस्य वचसाराधयितुमिति[7] विदित्वोत्थायासनाद् यावद् भगवन्तं प्रणम्येदमवोचत्। अश्मापरान्तकेषु जनपदेषु वासवग्रामके भदन्त महाकात्यायनः प्रतिवसति

1 D. आर्येण  2 D. ०भावेनाधिवासितवान्। Tib. 265a, l. 7: འཕགས་པའི་མི་སྨྲ་བས་དེའི་མཚན་མོ་འདས་པར་ མཛད་དོ།

3 D. omits स्वर ; Tib. 265b, l. 2: དབྱངས་ཀྱི་ང་རོས་ཆེད་དུ་བརྗོད་པ་དང་།

4 Ms. सत्यदृशः  5 D. omits it.

6 Tib. 265b, l. 3: དོན་གྱི་ཚོགས་ཀྱི་མདོ། Cf. *Mahāvagga*, 1, p. 196: सब्बाने'व अट्ठकवग्गिकानि सरेण अभासि।  7 D. ०रोचयितुमिति

योे मे उपाध्यायः। स भगवतः पादौ शिरसा वन्दतेऽल्पाबाधतां लघूत्थानतां च पृच्छति यावत् स्पर्शविहारतां च पञ्च च प्रश्नानि पृच्छति। विस्तरेणोच्चारयितव्यानि[1]।

अथ भगवान् श्रोणं कोटीकर्णमिदमवोचत्। अकालस्ते श्रोण प्रश्नव्याकरणाय। सङ्घमध्ये प्रश्नः पृच्छेयत। तत्र कालो भविष्यति प्रश्नस्य व्याकरणाय। अथ भगवान् काल्यमेवोत्थाय पुरस्ताद् भिक्षुसङ्घस्य प्रज्ञप्त एवासने निषण्णः। अथायुष्मान् श्रोणः [कोटीकर्णो येन भगवांस्तेनोपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्।] एकान्तस्थितो भगवन्तमिदमवोचत्। अश्मापरान्तकेषु जनपदेषु वासवग्रामके भदन्त महाकात्यायनः प्रतिवसति यो मे उपाध्यायः। स भगवतः पादौ शिरसा वन्दतेऽल्पाबाधतां च पृच्छति यावत् स्पर्शविहारतां च पञ्च च प्रश्नानि विस्तरेणारोचयति[2] यथा पूर्वमुक्तानि यावत् कस्य नैसर्गिकाणि। भगवानाह। तस्मादनुजानामि। प्रत्यन्तिमेषु जनपदेषु विनयधरपञ्चमेन गणेनोपसंपदा। सदा स्नानम्। एकपलाशिके उपानहे धारयितव्ये न द्विपुटे न त्रिपुटे[3]। सा चेत् क्षयधर्मिणी भवति अर्गलकं दत्त्वा धारयितव्ये[4]। भिक्षुर्भिक्षोश्चीवरकाणि प्रेषयति इतश्च्युतानि तत्रासंप्राप्तानि न कस्यचिन्नैसर्गिकाणि।

1 I, e. to be uttered in detail as before. 2 D. विस्तरणोच्चारयितव्यानि

3 D. न द्विपुटां न त्रिपुटां।

4 Ms. सचेत् क्षियधर्मिण्यौ भवतः। अर्घटकं वारयितव्ये चर्मा धारयितव्याम्। D. तां त्यक्त्वा पुनर्नवा ग्रहीतव्या। Tib. 266a, l. 5: གླན་པས་བདབ་སྟེ་བཅང་བར་བྱའོ། अगर्गलं in Pali *Vinaya*, I, p. 290 ; IV p. 121, means a strip of cloth for patching up a hole in a cīvara; see Infra.

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। यदुक्तं भदन्त भगवता प्रत्यन्तिमेषु जनपदेषु विनयधरपञ्चमेन गणेनोपसंपदा। तत्र कतमोऽन्तः कतमः प्रत्यन्तः। पूर्वेणोदालिन् पुण्ड्रवर्धनं[1] नाम नगरं तस्य पूर्वेण पुण्ड्रकक्षो[2] नाम दावः। [सोऽन्तः।] ततः परेण प्रत्यन्तः। दक्षिणेन शरावती[3] नाम नगरी। तस्याः परेण शरावती नाम नदी। सोऽन्तः। ततः परेण प्रत्यन्तः। पश्चिमेन स्थूणोपस्थूणकौ[4] ब्राह्मणग्रामकौ। सोऽन्तः। ततः परेण प्रत्यन्तः। उत्तरेण उशीरगिरिः[5]। सोऽन्तः। ततः परेण प्रत्यन्तः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति। किं भदन्त आयुष्मता श्रोणेन कोटीकर्णेन कर्म कृतं यस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले जातो रत्नप्रत्युप्तिकया[6] कर्णे आमुक्तिकया भगवतः शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्[7]।

भगवानाह। भूतपूर्वं भिक्षवो वाराणस्यां नगर्यां काश्यपो नाम तथागतोऽर्हन् सम्यक्संबुद्धो भगवाञ्छास्ता लोक उत्पन्नः। तेन खलु समयेन वाराणस्यां द्वौ जायापतिकौ। ताभ्यां

1 Tib. 266a. l. 7: རི་ཁ་ར་ཤིང་འཕེལ།

2 D. पुण्ड्रकक्षो नाम पर्वतः। Tib. 266b, l. 1: རི་ཁ་ར་ཚང་ཚིང།

3 D. सरावती। Ms. प्रत्यन्त नगराबती नाम नगरी तस्या परेण शरावती। Tib. ibid., འདམ་བུ་ཅན།

4 Ms. स्थोणोपस्थोणो ब्राह्मणग्रामो। Tib. 266b. 12: ཀ་བ་དང་ཉེ་བའི་ཀ་བ་དག།

5 D. उसीर

6 Ms. जातरत्नुप्रत्युप्तिकया; see p. 161.

7 D. omits this para excepting the second line.

काश्यपस्य सम्यक्संबुद्धस्यान्तिके शरणगमनशिक्षापदान्युद्गृहीतानि। यदा काश्यपः सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा कृकिणा चतूरत्नमयं चैत्यं कारितं समन्ताद् योजनमर्धयोजनमुच्चत्वेन। तेन तत्र [1]खण्डस्फुटप्रतिसंस्करणाय ये पूर्वनगरद्वारे करप्रत्याया उत्तिष्ठन्ते ते तस्मिन्[2] स्तूपेऽनुप्रदत्ताः। यदा कृकी राजा कालगतस्तस्य पुत्रः सुजातो [3]नाम्ना स्वराज्ये प्रतिष्ठापितः। तस्यामात्यैः स्तोकाः करप्रत्याया उपनामिताः। राजा[4] पृच्छति। [किं कारणमस्माकं भवद्भिः स्तोकाः करप्रत्याया उपनामिताः।°] किमस्माकं विजिते करप्रत्याया उत्तिष्ठन्ते। ते कथयन्ति। देव कुतः करप्रत्याया उत्तिष्ठन्ते। ये देव पूर्वद्वारे करप्रत्यायास्ते वृद्धराज्ञा स्तूपे खण्डस्फुटप्रतिसंस्करणाय[5] प्रज्ञप्ताः। यदि देवोऽनुजानीते वयं तान् करप्रत्यायान् समुच्छिन्दामः। स कथयति। भवन्तो यन्मम पित्रा कृतं तदेव ब्रह्मकृतम्[6]। ते संलक्षयन्ति। यदि देवोऽनुजानीते वयं तथा करिष्यामो यथा स्वयमेव ते करप्रत्याया नोत्थास्यन्ति। तैः स द्वारो बद्ध्वा स्थापितः। न भूयः करप्रत्याया उत्तिष्ठन्ते। तस्मिन् स्तूपे च स्फुटितकानि प्रादुर्भूतानि। तौ जायापती वृद्धीभूतौ तत्रैव स्तूपे परिकर्म कुर्वाणौ तिष्ठतः। उत्तरापथाच्च सार्थ-

1 Ms. खराडरिद्दप्रतिसंस्करनीये पूर्वेण नगर।

2 Ms. तस्मै

3 Ms. स्वजातो नाम्ना राज्ये

4 D. सोऽमात्यानामन्त्रयते।

5 Ms. खराडछुटप्रतिसंस्करणीये

6 D. यन्मम पित्रा कृतं देवकृतं न तु ब्रह्मकृतं तत्। Ms. तदेव कृतं ब्रह्मकृतम्।

वाहः पण्यमादाय वाराणसीमनुप्राप्तः। तेनासौ दृष्टः स्तूपश्चटितस्फुटितकैः प्रादुर्भूतैः[1]। स दृष्ट्वा पृच्छति। अम्ब तात कस्यैष स्तूप इति। तौ कथयतः। काश्यपस्य सम्यक्संबुद्धस्य। केन कारितः। कृकिणा राज्ञा। न तेन राज्ञा अस्मिन् स्तूपे खण्डस्फुटप्रतिसंस्करणाय[2] किञ्चित् प्रज्ञप्तम्। तौ कथयतः[3]। प्रज्ञप्तं ये पूर्वनगरद्वारे करप्रत्यायास्तेऽस्मिन्[4] स्तूपे खण्डस्फुटप्रतिसंस्करणाय निर्यातिताः। कृकी राजा कालगतः। तस्य पुत्रः सुजातो नाम्ना[5] स्वराज्ये प्रतिष्ठितः। तेन ते करप्रत्यायाः समुच्छिन्नाः। तेनास्मिन् स्तूपे चटितस्फुटितकानि प्रादुर्भूतानि। तस्य रत्नकर्णिका कर्णे आमुक्तिका। तेन सावतार्य[6] तयोर्दत्ता। अम्ब तातानया रत्नकर्णिकया अस्मिन् स्तूपे खण्डस्फुटप्रतिसंस्कारं कुरुतमिति[7] यावदहं पण्यं विसर्जयित्वागच्छामि। ततः पश्चाद् भूयोऽपि दास्यामि। तैस्तां विक्रीय तस्मिन् स्तूपे [8]खण्डस्फुटप्रतिसंस्कारः कृतः। अपरमुत्सर्पितम्[9]। अथापरेण समयेन स सार्थवाहः पण्यं विसर्जयित्वागतः। तेन स दृष्टः स्तूपेऽसेचनकदर्शनः[10]। दृष्ट्वा स च भूयस्यापि मात्रयाभिप्रसन्नः। स प्रसादजातः पृच्छति। अम्ब तात मा युष्माभिः किञ्चिद् उद्धारी-

1 D. चटितः स्फुटितकः प्रादुर्भूतः। 2 Ms. छुट्टप्रतिसंस्कारि० 3 Ms. कथयतां
4 Ms. करप्रत्ययां 5 Ms. स्वजातो; D. नाम 6 D. सा रत्नकर्णिका०
7 Ms. चटितस्फुदितकाणि कुर्वंषेति 8 Ms. खराडफुट; D. drops it.

9 Tib. 267b, l. 3: ཁ་ཅིག་ནི་ལྷག་མོ། =उद्वृत्तम्, अवशिष्टम्।

10 Tib. 267b, l. 4: དེས་མཆོད་རྟེན་དེ་ལྟ་བས་མི་ངོམས་པ་ཞིག་ཏུ་མཐོང་ངོ། Ms. ०दर्शिनः

कृतम्[1]। तौ कथयतः। पुत्र नास्माभिः किञ्चिद् उद्धारीकृतं किन्त्वपरमुत्सर्पितं[2] तिष्ठति। तेन प्रसादजातेन यत् तत्रावशिष्टम् अपरं च दत्त्वा महतीं पूजां[3] कृत्वा प्रणिधानं च कृतम्। अनेनाहं कुशलमूलेनाढ्ये महाधने महाभोगे कुले जायेयम्। एवंविधानां च धर्माणां लाभी स्याम्। एवंविधमेव शास्ता-[रमारागयेयं मा विरागयेयमिति। किं मन्यध्वे भिक्षवः। योऽसौ सार्थवाह एष एवासौ श्रोणः कोटीकर्णः। यदनेन काश्यपस्य सम्यक्संबुद्धस्य स्तूपे कारां कृत्वा प्रणिधानं कृतं तस्य कर्मणो विपाकेनाढ्ये महाधने महाभोगे कुले जातः। मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अहमनेन काश्यपेन सम्यक्संबुद्धेन[4] समबलः समजवः समधूरः समसामान्यप्राप्तः शास्ता आरागितो न विरागित[5] इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः एकान्तशुक्लानां कर्मणामेकान्तशुक्लो विपाकः व्यतिमिश्राणां व्यतिमिश्रः। तस्मात् तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। [इत्येवं वो भिक्षवः शिक्षितव्यम्। भिक्षव ऊचुः। ] किं भदन्तायुष्मता श्रोणकोटीकर्णेन कर्म कृतं यस्य कर्मणो विपाकेन दृष्ट एव धर्मे अपाया दृष्टाः। भगवानाह। यदनेन मातुरन्तिके खरवाक् कर्म निश्चारितं तस्य कर्मणो विपाकेन दृष्ट एव धर्मे अपाया दृष्टाः[6]।

1 Tib. 267b, l. 4: སྐྱིན་པོ =borrowed    2 Ms. ०सर्पितक

3 Ms. महान्तं पूजासत्कारं  4 D. adds सार्धं  5 Ms. आराग्यतो न विराग्यत इति।

6 Here ends the story of the Divyāvadāna (p. 24).

बुद्धो भगवान् श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे। आयुष्मानुपनन्दः संघनवकः। तस्य पंक्त्या कटकटायमंचकः[1] प्राप्तः। स भयेन परिवर्तते। मा भेत्स्यतीति संलक्षयति। अहमुपनन्दो मंचकस्यापि स्पृहयामि[2]। नोपनन्द इति नामधेयं धारयामि यदि शय्यां मंचकं वा नोपावर्तयामि। स काल्यमेवोत्थाय राज्ञः प्रसेनजितः कोसलस्य [सकाश]मुपसंक्रान्तः। स तेनोक्तः। स्वागतं भदन्तोपनन्दस्य। कश्चिद्भदन्तोपनन्दः सुखं शयितः। स कथयति। गिल्पेठ किं त्वं न जानीषे यथाहमष्टपुटीं[3] शय्यां कल्पयाम्युपनन्दोऽपि तथैवेति। अहं सङ्घनवको मम पंक्त्या कटकटायमंचकः प्राप्तः। सोऽहं भयेन परिवर्तामि। मा भेत्स्यतीति कल्पते[4]। भदन्तोपनन्दस्येदृशी अष्टपुटी शय्या साधु कल्पते सुष्ठु कल्पते[5]। कुत्र प्रतिक्षिप्तं केन वा प्रतिक्षिप्तम्। यदि ते कल्पते गृहीतो[6] भवतु। [उपनन्दः कथयति।] किं मम कोसलो जनपदो वर्तते। विहारं [7]नामयित्वानुप्रयच्छ। तेन तस्याष्टौ मनुष्या अनुप्रदत्ताः। तत्र चतुर्भिः शयनासनं गृहीतं चतुर्भिः खट्वा। ते गृहीत्वा वीथ्या मध्येन संप्रस्थिताः। ते ब्राह्मण-

1 Ms. गंतृ ; Tib. 268a, l. 6: དེ་གྲལ་རིམས་ཀྱིས་ཁྲི་ལྡེག་པ་ཞིག །

2 Ibid. ཚགས་སམ །

3 Ms. अष्टपुटायां ; ཤལ་སྟན་རིམ་པ་བརྒྱད་ལ་ཉལ་བ་བཞིན །

4 Tib. 268b, l. 2: དེ་ཞག་གི་དགས་ནས་ཁྲི་བོ་ལྷ་འོག་ཀྱང་མི་སྐྱུར་བར་ཉལ་ལོ །

5 Ibid: ཤིན་ཏུ་བཏགས་པའོ །

6 Ms. गृहीत्वा भवन्तु ।

7 Tib. 268b, l. 3: སྐྱོལ་ལ་བྱིན་ཅིག །

गृहपतिभिर्दृष्टाः। दृष्ट्वा च पृच्छन्ति। कुत्र[1] भवन्तोऽस्य देवशय्यां कल्पयिष्यन्ति। उपनन्दः कथयति। स्वगृहे। कस्यैषा शय्या नीयते। उपनन्दः कथयति। मयैषा लब्धा। तेऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। किं भदन्तोपनन्दस्य श्रामणक[स्य] कामगुणा बाधन्ते। तेन विहारं गत्वा विहारं सिक्तं संमृष्टं सुकुमारी गोमयकार्ष्यनुप्रदत्ता। शय्यां प्रज्ञप्य निषेत्स्यामीति। भगवान् च तं प्रदेशमनुप्राप्तः। सौद्धिल्यजातो भगवन्तमिदमवोचत्। पश्य मम भदन्त कीदृशी शय्या। तत्र भगवान् भिक्षूनामन्त्रयते स्म। आदित एव भिक्षवः उपनन्दो [2]मोहपुरुषः प्रतिगोपको[3] वेदितव्यः। भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षव उच्चशयनमहाशयने शय्यां कल्पयन्ति। तस्मान्न भिक्षुणोच्चशयनमहाशयने निषेत्तव्यम्। निषीदति सातिसारो भवति।

उक्तं भगवता न भिक्षुणोच्चशयनमहाशयने निषेत्तव्यमिति। अन्यतमेन गृहपतिना बुद्धप्रमुखा भिक्षुसंघा अन्तर्गृहे निमंत्रिताः। स उच्चान्यासनानि प्रज्ञपयितुमारब्धः। आयुष्मानानन्दः अनुकालं प्रविष्टः। तेन दृष्टः य उच्चान्यासनानि प्रज्ञपयन्। स तेनोक्तः। नैतानि गृहपते भिक्षु[प्रति]रूपाण्यासनानि। अपनय। स तान्यपनयितुमारब्धः। भगवांश्च तत्रागतः। जानकाः पृच्छका बुद्धा भगवन्तः। पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम्। किमिदमानन्द करिष्यसि। भगवन्नयं गृहपतिर्महार्हाणि शयनासनानि प्रज्ञपयति।

1 Ms. तत्र

2 Ms. माह

3 Tib. 269a, 1. 1: སྤྲོད་པ།

नैतानि गृहपते भिक्षुप्रतिरूपाणि शयनासनानि। अपनयैतानि। सैषोऽपनयति। मानन्द गृहपतिं वारय। प्रज्ञपयन्तु न सर्वत्रानन्द रिद्धिष्यति[1]। तस्मादनुजानाम्यन्तर्गृहे उच्चासने निषेत्तव्यम्। नाभिनिपतितव्यम्[2]। विहारे नैव निषेत्तव्यम्[3]। निषद्याभिनिपतति सातिसारो भवति।

अन्यतमो भिक्षुस्त्रिचीवरको दक्षिणापथात् श्रावस्तीमनुप्राप्तो भगवतः पादाभिवन्दकः। तस्य चर्मकास्तरिका[4] शोभना। स तत्रोपनन्देन दृष्टः। स तेनोक्तः। पिण्डपातिक[5] प्रयच्छ ममैतत चर्म चैत्याभिवन्दको[6] गच्छामि। स कथयति। भदन्तोपनन्द गच्छ त्वमावासम्। अहं चैत्याभिवन्दक एवागतः पादाभिवन्दकः। किं त्वं जानीषे असमर्थोपनन्द ईदृशं चर्म समुदानेतुम्। पश्य भदन्तोपनन्द येन त्वमसमर्थस्तेनाहं तव नानुप्रयच्छामि।

राज्ञः प्रसेनजितः कोसलस्य बड्रो नाम गवाध्यक्षः आयुष्मत उपनन्दस्य सप्रेमकः। स तस्य सकाशमुपसंक्रान्तः। यावद्वसन्तकाले चित्रोपचित्रको वत्सो जातः। सैकस्य वत्सस्य पृष्ठं परामृशति। वड्रेणोक्तः। किं भदन्तोपनन्द

1 For ऋद्धिष्यति 2 Ms. नालनिषैत्तव्यम्

3 Cf. *Mahāvagga*, I, p. 194: अनुजानामि भिक्खवे गिहिविकतं अभिनिसीदितुं न त्वेव अभिनिपज्जितुम्।

4 Ms. चर्मकर्यत्रिक 5 Ms. पिराडपात्यक

6 Tib. 269b, l. 1: The text restored stands thus: अहं भगवतः पादाभिन्दकः गच्छामि। स कथयति। भदन्तोपनन्द युक्तमेतत् न युक्तम्। अहमपि भगवतः पादाभिवन्दकोऽवागतः। पिराडपातिकस्त्वमिति मन्ये। भदन्तोपनन्द एवंरूपचर्मग्रहणे त्वं समर्थो वासमर्थः। पश्य भदन्तोपनन्द येन त्वमसमर्थस्तेनाहं तव नानुप्रयच्छामि।

काङ्क्षसे त्वमस्य मातुः क्षीरम्। नेदम्। स कथयति। एतच्च भवतु। अपि तु यस्य भिक्षोरीदृशं चर्मसु अल्पोत्सुकः कुशलपक्षं कुर्यात्। स कथयति। भदन्तोपनन्द गच्छ। विज्ञातम्। स प्रक्रान्तः। तेन गोपालस्याज्ञा दत्ता एतद्वत्सकं प्रघात्य चर्म गृहीत्वा[1] भदन्तोपनन्दस्य नीत्वानुप्रयच्छस्व। स तं वत्सकं प्रघात्य चर्म गृहीत्वा संप्रस्थितः। सा गौः पुत्रस्नेहेन हंभारवं कुर्वती पृष्ठतः पृष्ठतः समनुससार[2]। जेतवनं प्रविष्टा सा गौः जेतवनद्वारे हंभा-[रवं] रवमाना तिष्ठति। जानकाः पृच्छका बुद्धा भगवन्तः। पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम्। कस्मादानन्द इयं गौः जेतवनद्वारे तिष्ठति। आयुष्मानानन्दः कथयति। भगवन् तस्या वत्सकः चर्मकार्थाय भदन्तोपनन्देन प्रघातापितः। तेनेयं गौः जेतवनद्वारे हंभारवं रवमाना तिष्ठति। भगवानाह। यः कश्चिदादीनवो भिक्षवश्चर्म धारयन्ति। तस्मान्न भिक्षुणा चर्म धारयितव्यम्। धारयन्ति सातिसारा भवन्ति।

उक्तं भगवता। न चर्म धारयितव्यम्। अन्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघो निमन्त्रितः। स चर्मकान्यासनानि प्रज्ञपयितुमारब्धः। पूर्ववत्तु [न] सर्वत्र संपतस्यते। तस्मादन्तर्गृहे चर्मासने निषेत्तव्यं न निप[ति]तव्यम्[3]। विहारे [न] निषेत्तव्यं

1 Ms. गृहाय

2 Ms. समनुवस्वास ; Tib. 269b, l. 5: རྗེས་བཞིན་དུ་སོང་བ་ལས། Cf. Pali: अनुबद्धा।

3 Tib. 269b, l. 7: འདུག་པར་བྱའི་ཉལ་བར་མི་བྱའོ། Cf. Vinaya, I, p. 194: अभिनिसीदितुं न त्वेव अभिनिपज्जितुम्।

न निप[ति]तव्यम् । निषीदति निपतति[1] सातिसारो भवति ।

राजगृहनिदानम् । पिलिन्दवत्सस्य [सदा ग्लानकस्य][2] यानमनुज्ञातम् । षड्वर्गिका यानेन गन्तुमारब्धाः । तस्मान्न गन्तव्यं [यानेन] । स एवादीनवः । तस्माद् द्वाभ्यां गन्तव्यं जीर्णेन वा जरादुर्बलेन ग्लानेन वा अप्रयोगक्षमेण ।

भिक्षवो जनपदचारिकां चरन्ति । नद्या गच्छन्ति । ते ततु°[3] न शक्नुवन्ति पात्रचीवरमुत्तोलयित्वा[4] । [एतद् भिक्षवो भगवतः आरोचयन्ति । भगवानाह । भिक्षुणा सन्तरणं] शिक्षितव्यम् । षड्वर्गिका अजिरवतीमुत्तरन्त्यपि स्रोत उत्तरन्त्यपि[5] । गोपालदातीर्य आगताः[6] । [भगिनि] उत्तारयाम युष्माकमेवं कुरुध्वम् । तैस्तासामङ्गप्रत्यङ्गानि परामृष्टानि । भूयः आगच्छत । ताः कथयन्ति । येऽस्माकं स्वामिनापि न प्रदेशा परामृष्टास्ते युष्माभिः परामृष्टाः । ता अवध्यायन्ति क्षिपन्ति विवाचयन्ति[7] । भगवानाह । यः कश्चिदादीनवो भिक्षवो मातृग्रामं स्पृशति । तस्मान्न भिक्षुणा मातृग्रामं स्प्रष्टव्यमिति ।

[उक्तं भगवता । मातृग्रामो न स्प्रष्टव्यः] । नगरमनुष्याः

1 Ms. निपत्यसि ।

2 From the Tibetan version (270b-271a) it appears that some portions have been skipped over here.

3 Ms. तुरां

4 Ms. चीवरमुत्तारयित्वमुत्तारयित्वं ; Tib. 271a, l. 5: ཐོགས་ཏེ=holding aloft.

5 Ms. सत्युत्तरत्तरि ।

6 Tib. 271a. l. 7: རྫི་ཅན་ན་ཕྱུགས་རྫི་བུད་མེད་དག=female cattle-keepers.

7 Cf. Pali : उज्झायन्ति खीयन्ति विपाचेन्ति ।

उद्यानप्रियाः[1] । तेषामुद्यानगतानामन्यतमा स्त्री पानीयस्यार्थाय नदीमवतीर्णा । सा तृष्यते । तां मनुष्योऽवलोकयन्[2] गच्छति । तेन भिक्षुर्दृष्टः । आर्येण काचित स्त्री प्लवमाना[3] दृष्टा । दृष्टा एषा प्लवते[4] । दिवसे पानीयं प्रतिवीक्षमाणा तिष्ठति एवं प्राणोऽस्यायते[5] । एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । उत्तारयितव्या । अपराः कथयन्ति मुंचतु । अतिबला भवन्ति । प्रतिमोक्तव्या[6] । अपरा निश्चेष्टा भवन्ति । ता वालिका-स्थलं कृत्वावमूर्धिकाः स्थापयित्वा छोरयित्वा गच्छन्ति । ताः शृगालैर्भक्ष्यन्ते । न छोरयित्वा गन्तव्यम् । रज्यन्ति । एकान्ते स्थातव्यम् । ये स्वाध्यायकारका भिक्षवस्तैः स्वाध्यायनिका कर्तव्या। [ये] ध्यायिनस्तैर्मनसिकारः कर्तव्यः । भक्तच्छेदो[7] भवति । ये तत्र गोपालकाः पशुपालका भवन्ति तेषामनुपरितस्तु[8] गन्तव्यम् ।

षड्वर्गिका गोपुच्छेन तरन्ति । अन्यतमो गृहपतिः । तस्य गावः । [तासां] तावदुत्तारोत्तारं कृत्वा यावत् क्षीरमन्तर्हितम्[9]।

1 Ms. पुर्वांटी उद्यानप्रियस्तेषाम् । 2 Ms. मनुष्योपल्योद्वयं ।

3 Ms, प्यायमाना ।

4 Ms. प्याते । Tib. 271b, l. 3: འཁྱེར་བ།

5 Tib. 271b, l. 4: མཐོང་སྟེ་ཆུས་ཁྱེར་བ་པ་བི་ཡིན་ནོ། པ་བི་དེད་ལྟར་ཤི་ལ་ཐུག་ན་ཉིན་སྲོག་ཐག་ཆུ་ལ་ལྟ་ཞིང་འཁོད་དམ།

6 Tib. 271b. l. 5: གཞན་དག་ན་རེ་ཐོང་ཤིག་ཅེས་ཟེར་ན། གལ་ཏེ་མཐུ་ཡོད་པ་ཡིན་ན་གཏང་བར་བྱའོ།

7 I. e. mid-day meal-time passes.

8 Ms. ॰परित्स्य ; i. e. to go towards herdsmen.

9 Tib. 271b, l. 7: བའི་འོ་མ་ཟད་ཟད་དུ་ཕར་རྒལ་ཚུར་རྒལ་ལ།

तेन गोपालकः पृष्टः। कस्मादद्य क्षीरं नास्ति। ते कथयन्ति। आर्यकैः षड्वर्गीयैः पूर्ववत्। सोऽवध्यायति क्षिपति विवाचयति। तस्मान्न भिक्षुणा गोपुच्छेन तर्तव्यम्। उक्तं भगवता। न गोपुच्छेन तर्तव्यमिति। भिक्षूणां नदीसन्तरेण विघातो जातः। हस्तिपुच्छेन नेच्छन्ति तर्तुम्। भगवानाह। पंचानां बालधीयानां पुच्छेन तर्तव्यम्। हस्त्याजानेय[स्य] अश्वाजानेयस्य[1] वृषभस्य महिषस्य चमरस्य। अपितु भृषिणा[2] तर्तव्यम्।

[उक्तं] भगवता भृषिणा तर्तव्यमिति। षड्वर्गीयैश्चित्रोपचित्राणि कमलमालाणि[3] स्त्रीपुरुषविप्रतिपन्नानि कृतानि। ते ब्राह्मगगृहपतिभिर्दृष्टाः कथयन्ति। भवन्तः किमिदम्। ते कथयन्ति। भगवता भृषिणा[4] अनुज्ञाताः। तेऽवध्यायन्ति। आर्य युष्माकं श्रामणकः कामगुणो भवति। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न भिक्षुभिश्चित्रोपचित्राणि कमलमालाणि[3] स्त्रीपुरुषैर्विप्रतिपन्नै भृषयो[4] धारयितव्याः। अपि तु द्वौ भृषी[5]। काषायः तारणिकश्च[6]।

अनाथपिण्डदेन गृहपतिना मंडलवाटं कारितम्। धर्मश्रव-

1 Ms. अश्वाजानेयास्या।

2. Ms. दृतिना; Tib. 272a, l. 3: ཀུལ་པས་ཀུལ་བར་བྱའི། भस्त्रया तर्तव्यम्।

In Dhaniya-sutta of the Suttanipāta, there is a word *bhisi* meaning a raft for crossing a pool or river. The Sanskrit form of this may be *bhṛṣi* though no such word has so far been found in any Buddhist-Sanskrit text.

3 Ms. ०माष्ट्रांणि Tib. 272a, l. 4: རི་མོར་བྲིས་ཞིང་པད་མ་ལྷུར་བྱི་དོར་བྱས་པ།

4 Ms. धृतया। 5 Ms. दृती।

6 Ms. काषायामानविका च; Tib. 272a, l. 6: ཆོས་བསྐུས་པ་དང། ཀུལ་སྐྱུར།

णा[य] काष्ठपादुकाभिर्भिक्षव आगताः। तैः स कुट्टिमः काष्ठपादुकाभिः क्षतविक्षतः कृतः। अनाथपिण्डदो गृहपतिः काल्यमेवोत्थाय भगवतः पादाभिवन्दक आगतः। तेन दृष्टम्। दृष्ट्वा कथयति। आर्याः किमत्र राजा प्रसेनजित् चतुरो गोणबलकायेन रात्रिं वासमुपगतः। ते कथयन्ति। न राजा अपि तु भिक्षवः काष्ठपादुकाभिरागताः। तैरेतद्विनाशितम्। सोऽवध्यायते। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवः काष्ठपादुकां धारयन्ति। तस्मान्न हि भिक्षुणा काष्ठपादुका धारयितव्या।

उक्तं भगवता न भिक्षुणा काष्ठपादुका धारयितव्या। भिक्षवोऽन्तर्गृहे उपगच्छन्ति। तेषां पादुकाः कर्दमेन क्लिद्यन्ते। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। अन्तर्गृहे भिक्षुणा काष्ठपादुका धारयितव्या। शुद्धा ब्राह्मणगृहपतयः संघे भिक्षूणां काष्ठपादुकामनुप्रयच्छन्ति। भिक्षवो न प्रतिगृह्णन्ति। ते कथयन्ति। आर्य यदा भगवाँल्लोके नोत्पन्नस्तदा तीर्थ्या दक्षिणीया आसन्। यावद्भगवानाह। प्रतिग्रहीतव्या। प्रतिगृह्य सांघिकायां वर्चस्कुट्यां वा[1] प्रस्रावकुट्यां प्रक्षेपयितव्या[2]।

उ[द्दा]नम्।

**वंशपत्रा च श्रोणश्च अनुज्ञाता हि गुप्तये।**
**तिर्यग्बद्धिका च पुरा पार्ष्णी पुटी च[3]।**

1 Ms. वर्चस्तुतिः

2 Ms. प्रदारयितव्या

3 बद्धिका=leather-strap; Tib, 272b, l. 7: དེ་བཞིན་བསེགས་སུ་ བཅིང་བ་དང་། རྩ་མོ་རྡིང་ བ་སྐྲ་ གུ་ཙན།

उक्तं भगवता। न काष्ठपादुका धारयितव्या इति। ते वंशपत्रपादुकां धारयन्ति। स एवादीनवः। भगवानाह। न वंशपत्रपादुका धारयितव्या। ते मुंजपादुकां धारयन्ति। स एवादीनवः। भगवानाह। न मुंजपादुका धारयितव्या। ते रज्जुपादुकां धारयन्ति। स एवादीनवः। भगवानाह। न रज्जुपादुका धारयितव्या। उक्तं भगवता। न रज्जुपादुका धारयितव्या इति भिक्षूणां वातशोणितं भवति। तेषां परिषेकेण चर्मपादुकाः क्लिद्यन्ते। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। यस्य वातशोणितं भवति तेन रज्जुपादुका धारयितव्या।

यदा श्रोणः कोटीविंशः प्रव्रजितस्तदा पादतलेषु सुवर्णवर्णानि रोमाणि चतुरंगुलमात्राणि षड्वर्गिकैर्दृष्टा[नि]। ते दृष्ट्वा कथयन्ति। एष तावन्नवनीतपिण्डः एकान्तघटने शासने किं प्रव्रज्य करिष्यति। तेन श्रुतम्। तस्य श्रुत्वाभिमानो जातः। स आयुष्मत आनन्दस्य सकाशमुपसंक्रान्तः। उपसंक्रम्यायुष्मन्तमानन्दं पृच्छति। कतमो भदन्तानन्द एकान्तघटनः समाधिरुक्तो भगवता। चंक्रम्याधिगमः आयुष्मन् श्रोण। तेन शीतवनं श्मशानं गत्वा चंक्रमेऽधिष्ठितः। तस्य चंक्रमतः सुवर्णवर्णानि रोमाणि चतुरंगुलमात्राणि शीर्णानि। ततः पश्चाच्चर्म[1] पश्चाच्छोणितम्। स यावदेकस्माच्चंक्रमशिरसोऽपरं[2] गच्छति तावत्त-

1 Ms. वचः ; Tib. 273a, l. 8: པགས་པ་རྗོལ།

2 Ms. शिरसौपरं ; Tib. 272b, l. 7: དེའི་འཆག་སའི་མགོ་གཅིག་ན།

स्यैकस्मिन् चंक्रमशिरसि काकाः शोणितं पिबन्ति द्वितीयेऽपि। धर्मता खलु बुद्धा भगवन्तो जीवन्तस्तिष्ठन्तो ध्रियमाणा यापयन्तः कालेन कालं नदीचारिकां चरन्ति विस्तरेण यावदेवास्मिंस्त्वर्थे बुद्धो भगवान्विहारचारिकां चरन् येनायुष्मतः श्रोणस्य कोटीविंशस्य विहारस्तेनोपसंक्रान्तः। अद्राक्षीद्भगवान् श्रोणस्य कोटीविंशस्य चंक्रमम्। दृष्ट्वा च पुनर्जानकाः पृच्छका बुद्धा भगवन्तो जानन्तो पृच्छन्ति। [पृच्छति] बुद्धो भगवानायुष्मन्तमानन्दमेकान्तघटकस्य भिक्षोश्चंक्रमम्। श्रोणस्य भदन्त कोटीविंशस्य। तस्मादानन्द अनुजानामि श्रोणेन कोटीविंशेन एकपलाशिका उपानहा धारयितव्या न द्विपुटी न त्रिपुटी। सा चेत् क्षयधर्मिणी भवति अर्गलकं[1] दत्त्वा धारयितव्या। अथायुष्मानानन्दो येनायुष्मान् श्रोणकोटीविंशस्तेनोपसंक्रान्तः। उपसंक्रम्य श्रोणं कोटीविंशमिदमवोचत्। यत् खल्वायुष्मन् श्रोण जानीथाः शास्त्रा ते एकपलाशिकोपानहा अनुज्ञाता न द्विपुटीति विस्तरः। किं भदन्तानन्द सर्वसंघस्य आहोस्विन्ममैवैकस्य। तवैवैकस्य। अकोप्या भदन्तानन्द शास्तुराज्ञा। स चेदहं धारयिष्यामि स्यान्मे अतो निदानं सब्रह्मचारिणो वक्तारः। प्रभूतं तव श्रोणकोटीविंशेन प्रव्रज्यावाप्तं यश्चम्पामसाधारणां[2] सप्तहस्तिकां चानीकमपहाय प्रव्रजितः स इदानीमुपानहकल्पमात्रे सक्तः। अपि तु यदि भग-

1 See above p. 189, n. 4.

2 Ms. यश्चन्दासाधारणं ; Tib. 273b, l. 6: གང་ཡང་ཡུལ་ཙམ་པ་སྤུན་མོ་ཙམ་ཡིན་པ་དང་།

चान् समागम्य सर्वसंघस्यानुजानीयादेवमहं धारयेयम्। एतत्-प्रकरणमायुष्मानानन्दो भगवतो विस्तरेणारोचयति। भगवानाह। तस्मादनुजानामि श्रोणं कोटीविंशमागम्य सर्वसंघेनैकपलाशिकोपानहा धारयितव्या न द्विपुटी[ति] विस्तरः।

अन्यतमो महल्लो भगवतः पुरस्तात् सोपानत्कश्चंक्रमति। अथ भगवांस्तं भिक्षुमिदमवोचत्। अपेहि भिक्षो मा मे पुरतस्तिष्ठ। तत्र भगवान् भिक्षूनामन्त्रयते स्म। यस्तावदसौ भिक्षवः शास्ता सर्वलोकामिषसंमृष्टो भवति तस्य तावच्छास्तुः श्रावका नैव लघु लघ्वेव पातकव्रतमापद्यन्ते। कुतः पुनः सर्वलोकामिषविसंयुक्तो विहरामि। भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवः उपानहौ धारयन्ति तस्मान्न भिक्षुणा उपानहा धारयितव्या इति।

अन्यतमश्च शोभितः प्रव्रजित इति। तस्योदकस्थानकं भग्नम्। स पादधावनिकायां पादौ प्रक्षाल्य पानीयेनास्यं पूरयित्वा मयूरगत्या संप्रस्थितः। स षड्वर्गिकैर्दृष्टः। ते कथयन्ति। आयुष्मन्तो विना वादित्रेण भिक्षुर्नृत्यति। वादित्रं वादयतेति। ते मुखवादित्रं वादयितुमारब्धाः। ते भिक्षुभिर्भर्त्स्यन्ते। किमौद्धत्यं कुरुत। ते कथयन्ति। किमत्रौद्धत्यम्। न पश्यत यूयं भिक्षुं विना वादित्रेण नृत्यन्तम्। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। जानकाः पृच्छका बुद्धा भगवन्तो जानन्तः पृच्छन्ति। पृच्छति बुद्धो भगवांस्तं भिक्षुं किमभिप्रायेण भिक्षो एवं कृतम्। शयनासनगुप्तयर्थं भदन्त। अनापत्तिरस्य भिक्षोः

शयनासनगुप्त्यर्थमेवं कुर्वतः। तस्मादनुजानामि शयनासनगुप्त्यर्थमेकपलाशिकोपानहा धारयितव्या। न द्विपुटी न त्रिपुटी। सा चेत् क्षयधर्मिणी भवत्यर्गलकं[1] दत्त्वा धारयितव्या।

उक्तं भगवता। एकपलाशिकोपानहा धारयितव्या इति। अन्यतमस्य पिण्डपातिकस्य गृहपतिरभिप्रसन्नः। सोऽनुपानहकः श्रावस्तीं पिण्डाय प्रविष्टः। स तेन गृहपतिना अनुपानहको दृष्टः। दृष्ट्वा च कथयति। आर्यस्य नास्त्युपानहः। आगच्छ चर्मकारसकाशं गच्छामः। उपानहौ दापयिष्यामि। स चर्मकारसकाशं गतः। तेन चर्मकार उक्तः। आर्यस्योपानहावनुप्रयच्छेत्युक्त्वा प्रक्रान्तः। तेन खलु समयेन द्वयोरेकपलाशिका उपानहाः क्रियन्ते भिक्षूणामुपरतकानां[2] च। स भिक्षुर्भूयो भूयश्चर्मकारसकाशमुपसंक्रामति। स नानुप्रयच्छति। अपरेण समयेन भूयस्तेन गृहपतिना स भिक्षुर्दृष्टोऽनुपानत्कः। दृष्ट्वा कथयति। आर्य न तेन शिल्पिना उपानहा दत्ता। गृहपति न श्रुतं त्वया दुर्लभः शिल्पी सत्यजल्पक इति। भूयो भूय उपसंक्रामामि नानुप्रयच्छति। स कथयति। आर्यागच्छ गृहं गच्छामः। स तेन गृहं नीत्वा प्रणीतेनाहारेण सन्तर्प्य बहुपुटी उपानहा दत्ता। भिक्षुः कथयति। गृहपते भगवता नानुज्ञातम्। स कथयति। आर्य गच्छ एकपुटीं कृत्वा धारयिष्यसि। स तां गृहीत्वा विहारं गतः। स तामादाय शस्त्रकं च वृक्षमूलं गत्वा उत्पाटयितुमारब्धः।

1 See above p. 189 n. 4.

2 Tib. 274b, l. 5: ཉེ་བརྣམས་དང་གཉིས་ཀྱི་ཕྱིར །

भगवांश्च तं प्रदेशमनुप्राप्तः। भिक्षो किं क्रियते। भगवता बहुपुटी उपानहा प्रतिक्षिप्ता। मम च बहुपुटी एव संपन्ना एकपुटीं कृत्वा धारयिष्यामि। अथ भगवत एतदभवत्[1]। दास्यन्ति वतामी श्राद्धा गृहपतयः श्रावकाणां बहुपुटी उपानहा तस्मादनुजानामि बहुपुटी उपानहा आगारिकविनिर्मुक्तेन[2] कृत्वा धारयितव्या। आयुष्मानुपाली यावत् पृच्छति। यदुक्तं भदन्त भगवता बहुपुटी उपानहा आगारिकविनिर्मुक्तेभिः कृत्वा धारयितव्या। कियता भदन्त आगारिकविनिर्मुक्ता वक्तव्या। अन्तत उपालिन् सप्त वाष्ट वा पदानि परिभुक्तानि भवन्ति।

वैशाल्यां निदानम्। तेन खलु समयेन वैशाल्यामेवंरूपा उपानहाः क्रियन्ते। तद्यथा हिनिहिनायमानाः किणिकिणायमाना मेण्डविषाणिका बोधिपटपत्रकाः चित्रोपचित्राः पंचकार्षापणमूल्याः। षड्वर्गिकैर्हि दृष्टो भवति उपानहा यावत् पिधाय ते पार्ष्णिपादाङ्गुष्ठेन पाटयित्वा ग्रीवायां मेल्लयित्वा गृह्णन्तीदं ते दानं चित्तालङ्काराय[3]। सामन्तकेन शब्दो विसृतः। आर्यका उपानहान्येवंरूपाणि हरन्ति। एकायुवत्या[4] जामाता आगतः। तस्य तयो-

1 Ms. एतदवोचन्; Tib. 275a. l. 2: སྙམ་དུ།

2 Tib. 275a, l. 3: ཁྱིམ་པའི་དམན་མ་ཡིན་ཕན་ཆད་བཅང་བར་བྱའོ།

3 Tib. 275a, l. 4-5: རྟིང་པ་ཀང་པའི་མཐེ་བོས་མནན་ནས་ཤླག་པ་ནས་ཕྲལ་དེ་ཁྱོད་ཀྱིས་སྐྱིན་པ་འདི་ཕྲུལ་བས་སེམས་ཀྱི་རྒྱན།

4 Tib. 275a, l. 7: གྲན་མོ་ཞིག་གི་མག་པ་ཞིག།

पानहा दत्ता। उक्तश्चार्या उपानहां हरन्ति। अप्रमत्तो भविष्यसि यथा न हरापयसीति। पिण्डपातिकः पिण्डपातं प्रविशति। तेन दृष्टः स एकस्मिन् गृहे प्रविष्टः। असावपि तत्रैव प्रविष्टः। स तस्माद् गृहान्निर्गत्यापरं गृहं प्रविष्टः। पिण्डपातिकोऽपि तत्रैव प्रविष्टः। स कथयति। आर्य कस्यार्थे त्वं मां पृष्ठतः पृष्ठतः समनुबद्धः। किमिच्छस्युपानहामपहर्तुम्। भद्रमुख नाहं तवोपानहाम् अपहरामि त्वहं पिण्डपातं प्रविशामि। स कथयति। आर्य हर वा मा वापि तु युष्माकं सामन्तकेन शब्दो विसृतः 'आर्यका उपानहा हरन्तीति'। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। अथ भगवत एतदभवत्। यः कश्चिदादीनव इह भिक्षव एवंरूपाम् उपानहां धारयन्ति हिनिहिनिका इति विस्तरः।

तस्मान्न भिक्षुणा एवंरूपा उपानहा धारयितव्या हिनिहिनिका इति विस्तरः। भिक्षुरिमामेवंरूपाम् उपानहां धारयति सातिसारो भवति।

श्रावस्त्यां निदानम्। तेन खलु समयेन भिक्षूणामुपानहाभिः पादपृष्ठे व्रणानि कृतानि। ब्राह्मणगृहपतिभिर्दृष्टा[नि]। केन युष्माकं व्रणानि कृतानि। उपानहाभिः। किं न यूयं तिर्यग्बद्धा[1] धारयत। भगवता नानुज्ञातम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तिर्यग्बद्धिका[1] धारयितव्या। गृध्रकूट एव पर्वतो राजगृहे[2]। पर्वतमभिरुहतां पादाङ्गुष्ठेषु क्षतानि

1 See above, p. 201 n.

2 Ms. अपरे पुटी एव कर्तव्या ; Tib. 276a, l. 6: བྱ་རྒོད་ཀྱི་ཕུང་པོའི་རི་ལ་འཛེག་པ་ན།

भवन्ति । ते ब्राह्मणगृहपतिभिर्दृष्टाः । केन युष्माकं पादाङ्गुष्ठेषु क्षतानि । [गृध्रकूट]पर्वतमभिरुहताम् । न यूयं पुटापुटीं[1] धारयत । नानुज्ञातं भगवता । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । धारयितव्या । तत्रैवावतरतां पार्ष्ण्यो क्षता भवन्ति ।[2] [पूर्ववत् यावद् धारयितव्या ] ।

उद्दानम् ।

नालाम्बुजा मुण्डपूला[3] पूला हैमवतेषु च ।
ऋक्षचर्ममनुज्ञातमारा[4] शस्त्री च बद्धिका[5] ॥

श्रावस्त्यां निदानम् । भिक्षूणां नवेन तृणेन पादाः शूलिताः । ब्राह्मणगृहपतयः कथयन्ति । केन युष्माकं पादाः शूलिताः । नवेन तृणेन । यूयं नालाम्बुजं किं न धारयत । नानुज्ञातं भगवता । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह । नाला-

1 Tib. 276a, l. 7: རྩེ་མོ་སྦྲུ་བུ་ ཅན་མ་བཅང་སམ །or ལྷམ་ཡུ་ཙུ་ སྦུང་མ་ བཅངས་སམ །

2 The ms. stops here abruptly. In Tib. two more incidents are related here and ultimately Buddha allows the use of पुटापुटी ।

3 Ms. लोलाम्बुजा पुराडपोलाः ; cf. *Mvyut*. 272-22: मुराडपूला = a sort of slippers to which cotton leggings are attached.

4 Cf. *Mvyut*. 234-23.

5 Tib. 276a, l. 4:

མགུལ་ཆད་དང་ནི་ཡུ་ཙུ་སྦུང་ལྷམ །
ཁ་ཁྲོད་དག་དུ་སྒྲོ་གུ་ཅན །
དོམ་གྱི་པགས་པ་གནང་བ་དང །
སྨྱུང་བུ་འབྲིང་པུ་ཆུ་གྲོར །

म्बुजा धारयितव्याः। एवं वृद्धे तृणे मुण्डपूला धारयितव्याः। पूला हैमवतेषु च इति।

[1]यदा विरूढकेन मोहपुरुषेण कापिलवास्तवः शाक्याः प्रघातिताः तत्र केचिदुत्तरापथं गताः केचिद् यावन्नैवालं प्रविष्टाः। श्रावस्तीया वणिजो[2] नैवालं गताः। तैर्वणिजः [2]पृष्टाः। आर्यानन्दो ज्ञातिवत्सलो नास्माकमवलोकयतीति। याव[त्] तैस्तस्यारोचितम्। स नैवालं प्रविष्टः। तस्य हिमेन पादौ स्फुटितौ। स भिक्षुभिरुच्यते। तव पादौ[3] किमर्थमिदानीमीदृशौ। हिमेन। ते तव ज्ञातयः किं कुर्वन्ति। पूलां धारयन्ति। त्वं किमर्थं न धारयसि। भगवता नानुज्ञातः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। हैमवतेषु जनपदेषु पूला धारयितव्याः।

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। यदुक्तं भदन्त भगवता हैमवतेषु जनपदेषु पूला धारयितव्या इति। कतमे हैमवता जनपदाः। यत्रोदकस्थालकं श्यायति[4]।

भिक्षोर्लुब्धकोऽभिप्रसन्नः। तस्य ऋक्षचर्म संपन्नम्। स भिक्षोरनुप्रयच्छति। स न गृह्णाति। भगवांश्च तं प्रदेशमनुप्राप्तः। जानकाः पृच्छका बुद्धा भगवन्तः। पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम्। किमेष आनन्द भिक्षोर्लुब्ध[क]ः पृष्ठतः

1 This para does not appear in Tibetan. Evidently it is an interpolation. The mention of नैवाल is interesting. It refers very likely to Nepal.

2 Ms. वणिजाः।  3 Ms. तव पादौ जिह्वातलं यावत् विदावासं किमर्थं।

4 Tib. 277a, l. 2: གང་ན་སྣོད་དུ་ཆུ་འཁྱག་པ་ཡིན་ནོ །

पृष्ठतः समनुबद्धः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। दुर्लभा आनन्द लुब्धकस्य श्रद्धा। यदि शतसहस्रमपि लभति सर्वं प्रघातयति। तस्मात् यदि लुब्धको [1]रिक्षचर्मानुप्रयच्छति ग्रहीतव्यम्। गृहीत्वा गन्धकुटिद्वारे प्रज्ञपयितव्यं पादान्ते वा। सर्वं रिक्षचर्म चाक्षुष्यं स्वस्ति[2]।

भिक्षोरुपानहाश्छिन्नाः। स चर्मकारसकाशं गच्छति। [यावत्] दीर्घकालं गत्वा स्वबुद्धेर्वारयिष्यतीति[3]। सोऽन्यतमेन भिक्षुणा दृष्टः[4]। यावदस्ति मम कौशलं यदि भगवाननुजानीयाद् ग्रन्थयेयम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। यस्य कौशलं विद्यते तेन प्रतिगुप्ते प्रदेशे स्थित्वा ग्रन्थयितव्यम्। स कथयति। भगवतानुज्ञातः। ग्रन्थये। तत्रारया शस्त्रकेण बद्धिकया च प्रयोजनम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि भिक्षुणा आरा शस्त्रकं बद्धिका[5] च धारयितव्याः।

चर्मवस्तु समाप्तम्।

1 For ऋक्ष०।

2 Tib. 277a, l. 6: མིག་ལ་ཕན་ནོ། =good for the eyes.

3 Ibid, l.7: རང་གི་སླར་ལྡོག་པར་འགྱུར་རོ་སྙམ་ནས། Ms. स्वबुद्धिर्वारयिष्यतीति।

4 In Tibetan there are a few more lines, detailing the incident.

5 Tib. 277b, l. 5: སྦྱིང་བུ་དང་། འབྲིང་བུ་ནི་བཅང་བར་བྱའོ།

[अयं[1] मम कायो रूपी चातुर्महाभूतिकः। वि]ज्ञानमत्र प्रतिष्ठितमत्र पर्यापन्नम्। यत्त्वहमस्मात् कायात् मानसं व्युत्थाप्यान्यं कायमभिनिर्मायां रूपिणं मनोमयमविकलमहीनेन्द्रियम्। स तस्मात् का[यात् मानसं व्युत्थाप्यान्यं कायमभिनिर्मिमीते[2] रूपिणं मनोमयम]विकलमहीनेन्द्रियम्। तद्यथा [मणिर]ष्टांगो वैडूर्यः शुभो जातिमानच्छो विप्रसन्नोऽनाविलः पञ्चाङ्गरंगिके सूत्रेऽर्पितः स्यात् नीले पीते लोहिते अवदाते मंजिष्ठे। तं चक्षुष्मान् पुरुषो दृष्ट्वा [जानीयादयं मणिरिदं सूत्रमिति। एवमेव] स तस्मात् कायात् मानसं व्युत्थाप्यान्यं कायमभिनिर्मिमीते[2] रूपिणं मनोमयमविकलमहीनेन्द्रियम्[3]। तद्यथा पुरुषो मुंजादिषिकामावृह्यात्। तं चक्षुष्मान् पुरुषो दृष्ट्वा जानीयादयं [मुंज इयमिषिका। एवमेव

1 This is the last portion of the *Saṃghabhedavastu*. The previous leaves are all lost. It commences from the middle of the *Srāmaṇya-phala-sūtra*, corresponding to Pali *Sāmaññaphala-sutta* of the *Dīgha-nikāya*, I, p. 76:

अयं यो मे कायो रूपी चातुम्महाभूतिको मातापेत्तिकसम्भवो ओदन-कुम्मासुपचयो अनिच्चुच्छादन-परिमद्दन-भेदन-विद्धंसन-धम्मो। इदं च पन मे विञ्ञाणमेत्थ सितमेत्थ पटिबद्धं ति।

See Tibetan version, *Dulva*, IV. leaf 437a, l. 6 ff.

2 Ms. अभिनिर्न्निमीते

3 Cf. *Dīgha*, I, p. 76:

सेय्यथापि महाराज मणि वेडुरियो सुभो जातिमा अट्ठंसो सुपरिकम्मकतो अच्छो विप्पसन्नो अनाविलो सब्बाकारसम्पन्नो। तत्र सुत्तमावुतं नीलं वा पीतं वा लोहितं वा ओदातं वा पण्डुसुत्तं वा। तमेव चक्खुमा पुरिसो हत्थे करित्वा पच्चवेक्खेय्य "अयं खो मणि etc. up to पण्डुसुत्तं वा ति"। एवमेव खो महाराज भिक्खु एवं समाहिते चित्ते परिसुद्धे परियोदाते अनङ्गणे विगतूपक्किलेसे मुदुभूते कम्मनीये ठिते आनेञ्जप्पत्ते ञाणदस्सणाय चित्तमभिनीहरति अभिनिन्नामेति।

स तस्मात् कायात् मानसं व्युत्थाप्यान्यं कायमभिनिर्मिमीते रूपिणं मनोमयमविकलमहीनेन्द्रियम्। तद्यथा पुरुषः करण्डादहिमावृह्यात्। तं चक्षुष्मान् पुरुषो दृष्ट्वा जानीयादयं करण्डः [अयमहिः। एवमेव स] तस्मात् कायात् मानसं व्युत्थाप्यान्यं कायमभिनिर्मिमीते रूपिणं मनोमयमविकलमहीनेन्द्रियम्। तद्यथा पुरुषः कोषादसिमावृह्यात। तं चक्षुष्मान् पुरुषो दृष्ट्वा जानीयादयं कोशोऽयमसिः। [एवमेव स तस्मात् कायात् मानसं] व्युत्थाप्यान्यं कायमभिनिर्मिमीते रूपिणं मनोमयमविकलमहीनेन्द्रियम्।

स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनंगणे विगतोपक्लेशे रिजुभूते[1] कर्मण्ये स्थिते आनिंज्यप्राप्ते [1]ऋद्धिविषयसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्नमय्य[2] सोऽनेकविधमृद्धिविषयं प्रत्यनुभवति। तद्यथा एको भूत्वा बहुधा भवति[3]। बहुधा भूत्वैको भवति। आविर्भावं तिरोभावं ज्ञानदर्शनेन प्रत्यनुभवति। तिरःकुड्यं तिरःशैलं तिरःप्राकारमसज्जमानं कायेन गच्छति तद्यथा आकाशे। पृथिव्यामुन्मज्जननिमज्जनं करोति तद्यथा उदके। उदके अभिन्दस्रोतो[4] गच्छति तद्यथा पृथिव्याम्। आकाशे पर्यङ्केनातिक्रामति तद्यथा पक्षी शकुनिः। इमौ वा सूर्याचन्द्रमसावेवं महर्द्धिकावेवं महानुभावौ पाणिना आमार्ष्टि परामार्ष्टि[5] यावद् ब्रह्मलोकं

1 Ms. uses throughout रि for ऋ।

2 Pali: अभिनिन्नामेति।

3 Cf. *Mvyut.*, XV ; *Dīgha*, I, p. 78.

4 *Mvyut.*, XV, 13: अभिद्यमानो ; Pali: अभिज्जमानो।

5 *Ibid.*. 17: परामृशति परिमार्जयति ; Pali: परिमसति परिमज्जति।

कायेन वशे वर्तयति। तद्यथा दक्षः कर्मारो वा कर्मारान्तेवासी वा सुपरिकर्मीकृतं जातरूपं विदित्वा यां यां पिलन्धन[1]-विकृतिं काङ्क्षत्युपनयितुं यदि वा पट्टिकायां यदि वा कर्णिकायां यदि वा ग्रैवेये यदि वा हस्ताभरणे यदि वा पादाभरणे यदि वा अंगुलिमुद्रिकायां यदि वा जातरूपमालायां तत्र तत्र लघु लघ्वे-वोपनयति। एवमेव स एवं समाहिते परिशुद्धे पर्यवदाते अनं-गणे विगतोपक्लेशे रिजुभूते कर्मण्ये स्थिते आनिंज्यप्राप्ते रिद्धि-विषयज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। सोऽ-नेकविधमृद्धिविषयं प्रत्यनुभवति। तद्यथा एको भूत्वा बहुधा भवति। बहुधा भूत्वा एको भवति। आविर्भावं तिरोभावं ज्ञान-दर्शनेन प्रत्यनुभवति। तिरःकुडयं तिरःशैलं तिरःप्राकार-मसज्जमानः कायेन गच्छति तद्यथा आकाशे। पृथिव्यामु-न्मज्जननिमज्जनं करोति तद्यथोदके। उदके अभिन्दस्रोतो गच्छति तद्यथा पृथिव्याम्। आकाशे पर्यङ्केनातिक्रामति तद्यथा पक्षी [शकुनिः]। इमौ वा पुनः सूर्याचन्द्रमसावेवं महर्द्धि-कावेवं महानुभावौ पाणिना आमार्ष्टि परिमार्ष्टि यावद् ब्रह्म-लोकं कायेन वशे वर्तयति। तद्यथा दक्षः कुम्भकारो वा कुम्भ-कारान्तेवासी वा सुपरिकर्मीकृतं मृत्पिण्डं विदित्वा यां यामेव काङ्क्षते भाजनविकृतिमभिनिर्वर्तयितुं तां तामेव भाजनविकृतिं लघु लघ्वेवाभिनिर्वर्तयति। एवमेव स एवं समाहिते चित्ते पर्यवदाते

1 Ms. यस्यां यस्यां पिहिनिविकृति° ; Cf. Tib. 438b. 1. 5. =whatever ornament.

अनंगणे विगतोपक्लेशे रिजुभूते कर्मण्ये स्थिते आनिंज्यप्राप्ते रिद्धिविषयज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। एवमेव सोऽनेकविधमृद्धिविषयं प्रत्यनुभवति। तद्यथा एको भूत्वा बहुधा भवति। बहुधा भूत्वैको भवति। आविर्भावं तिरोभावं ज्ञानदर्शनेन प्रत्यनुभवति। तिरःकुड्यं तिरःशैलं तिरःप्राकार-मसज्जमानेन कायेन गच्छति तद्यथा आकाशे। पृथिव्यामु-न्मज्जननिमज्जनं करोति तद्यथोदके। उदके अभिन्दस्रोतो[1] गच्छति तद्यथा पृथिव्याम्। आकाशे पर्यङ्केनातिक्रामति तद्यथा पक्षी शकुनकः[2]। इमौ वा सूर्याचन्द्रमसावेवं महर्द्धिकावेवं महानुभावौ पाणिना आमार्ष्टि परिमार्ष्टि[3] यावद् ब्रह्मलोकं कायेन वशे वर्तयति। तद्यथा दक्षो दन्तकारो वा दन्तकारान्ते-वासी वा सुपरिकर्मीकृतं [दन्तं यां यामेव काङ्क्षते रूप-] विकृतिमभिनिर्वर्तयितुं तां तामेव रूपविकृतिं लघु लघ्वेवाभिनिर्वर्तयति[4]। एवमेव स एवं समाहिते चित्ते पर्यवदाते अनंगणे विगतोपक्लेशे रिजुभूते कर्मण्ये स्थिते आनिंज्यप्राप्ते रिद्धिविषयज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। सोऽनेकविधं रिद्धिविषयं प्रत्यनुभवति। तद्यथा एको भूत्वा बहुधा भवति। बहुधा भूत्वैको भवति। आविर्भावं तिरोभावं ज्ञानदर्शनेन प्रत्यनुभवति। तिरःकुड्यं तिरःशैलं तिरः-

1 *Mvyut.* उदकेऽप्यभिद्यमानो गच्छति तद्यथापि नाम महापृथिव्याम्। Cf. *Dīgha*, p. 78: उदके पि अभिज्जमानो गच्छति सेय्यथापि पठवियम्।

2 Ibid. शकुनिः। 3 Ibid. परामृशति परिमार्जयति। Cf. *Dīgha*, I, p. 71: परिमसति परिमज्जति।

4 Cf. *Dīgha*, I, p. 78.

प्राकारमसज्जमानेन कायेन गच्छति तद्यथा आकाशे। पृथिव्या-मुन्मज्जननिमज्जनं करोति तद्यथोदके। उदके अभिन्दस्रोतो गच्छति तद्यथा [पृथिव्याम्]। आकाशे पर्यङ्केनातिक्रामति तद्यथा पक्षी शकुनकः। इमौ वा पुनः सूर्याचन्द्रमसावेवं महर्द्धिकावेवं महानुभावौ पाणिना आमार्ष्टि परिमार्ष्टि[1] यावद् ब्रह्मलोकं कायेन वशे वर्तयति।

किं मन्यसे महाराज नत्वेवं सति मया दर्शितं सांदृष्टिकं श्रामण्यफलम्। तथ्यं भदन्त एवं सति भगवता दर्शितं सांदृष्टिकं श्रामण्यफलम्।

स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनंगणे विगतोपक्लेशे रिजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते दिव्यश्रोत्रज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्तमानुष्येणोभयान् शब्दान् शृणोति मानुष्यानप्यमानुष्यानपि। येऽपि दूरे येऽप्यन्तिके। तद्यथा शंखधामकः पुरुषो महाशैलपर्वतमभिरुह्य निशार्धे[2] शंखमाधमेत्तस्य शब्दोऽव्याहतः पृथग्दिशः[3] स्फुरेत्[4]। एवमेव स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते दिव्यश्रोत्रज्ञानसाक्षात्-

1 *Mvyut*. परामृशति परिमार्जयति। *Dīgha*, I, p. 78: परिमसति परिमज्जति।

2 Tib. 440b, l. 4: མཚན་ནམ་ཕྱེད་ཀྱི་དུས་སུ་དུང་ཤུས་ན། =अर्धरात्रे।

3 Tib. 440b, l. 4: ཕྱོགས་ཐ་དད་པ།

4 *Dīgha*, 1, p. 790 differs here from this text and the illustrations also are not very appropriate.

क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्तमानुष्येणोभयान् शब्दान् शृणोति मानुष्यानप्यमानुष्यानपि। येऽपि दूरे येऽप्यन्तिके।

स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते [1]चेतःपर्यायज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स परसत्त्वानां परपुद्गलानां वितर्कितं[2] विचारितं[3] मनसा मानसं यथाभूतं प्रजानाति। सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति। विगतरागं चित्तं विरागं चित्तमिति यथाभूतं प्रजानाति। सद्वेषं विगतद्वेषं समोहं विगतमोहं संक्षिप्तं विक्षिप्तं लीनं प्रगृहीतमुद्धतमनुद्धतम्। अव्युपशान्तं व्युपशान्तं समाहितमसमाहितमभावितं सुभावितम् अविमुक्तं वा चित्त[मविमुक्तं चित्त]मिति यथाभूतं प्रजानाति। विमुक्तं वा चित्तं विमुक्तं चित्तमिति यथाभूतं प्रजानाति। तद्यथा चक्षुष्मान् पुरुषः सुपरिशुद्धमादर्शमण्डलं गृहीत्वा संमुखनिमित्तं वा प्रत्यवेक्षते। एवमेव स एवं समाहिते चित्ते परिशुद्धे पर्यवदाने अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते चेतःपर्यायज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स परसत्त्वानां परपुद्गलानां वितर्कितं विचारितं मनसा मानसं यथाभूतं प्रजानाति। सरागं

1 Ms· दिव्यश्रोत्रज्ञान०

2 Tib. 441a, l. 4: རྣམ་པར་རྟོག་པ་དང །

3 Ibid.: རྣམ་པར་དཔྱོད་པའི་ཡིད །

चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति। विगतरागं चित्तं विगतरागं चित्तमिति यथाभूतं प्रजानाति। सद्वेषं विगतद्वेषं समोहं विगतमोहं संक्षिप्तं विक्षिप्तं लीनं प्रगृहीतमुद्धतमनुद्धतमव्युपशान्तं व्युपशान्तं समाहितमसमाहितं सुभावितमभावितमविमुक्तं वा चित्तमविमुक्तं चित्तमिति यथाभूतं प्रजानाति। सुविमुक्तं वा चित्तं सुविमुक्तं चित्तमिति यथाभूतं प्रजानाति।

किं मन्यसे महाराज न त्वेवं सति मया दर्शितं सांदृष्टिकं श्रामण्यफलम्। तथ्यं भदन्त एवं सति भगवता दर्शितं सांदृष्टिकं श्रामण्यफलम्।

स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियायां चित्तमभिनिर्णामयति। सोऽनेकविधं पूर्वनिवासं समनुस्मरति। तद्यथा एकामपि द्वे तिस्रश्चतस्रः पंच षट् सप्ताष्टौ नव दश विंशतं[1] त्रिंशतं चत्वारिंशतं पंचाशतं जातिशतं जातिसहस्रं जातिशतसहस्रम् अनेकान्यपि जातिशतानि अनेकान्यपि जातिसहस्राणि अनेकान्यपि जातिशतसहस्राणि संवर्तकल्पमपि विवर्तकल्पमपि संवर्तविवर्तकल्पमपि अनेकानपि संवर्त[कल्पा]ननेकानपि विवर्तकल्पाननेकानपि संवर्तविवर्तकल्पान् समनुस्मरति। अमी नाम ते भवन्तः सत्त्वा यत्राहमासम्। एवंनामा एवंजात्य एवंगोत्र एवमाहार एवंसुखदुःखप्रतिसंवेदी एवंदीर्घायुः एवंचिरस्थितिक एवमायुष्पर्यन्तः। सोऽहं[2] तस्मात्

1 Ms. द्विंशतं 2 In Pāli अहं is omitted.

स्थानाच्च्युतोऽमुत्रोपपन्नः। तस्मादपि च्युतोऽमुत्रोपपन्नः। तस्मादपि च्युतः इहोपपन्न इति। साकारं सोद्देशमनेकविधं पूर्वनिवासमनुस्मरति। तद्यथा पुरुषो ग्रामाद् ग्रामं गच्छेत्। तस्मादपि ग्रामादपरं ग्रामं गच्छेत्। तस्मादप्पेहागच्छेत्[1]। तस्यैवं स्यात्। अहममुष्माद् ग्रामादमुं ग्राममागतः। तस्मादप्पेहागत[2] इति। एवमेव स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति तद्यथा एकामपि जातिं द्वे तिस्रश्चतस्रः पंच षट् सप्ताष्टौ नव दश विंशतं त्रिंशतं चत्वारिंशतं पंचाशतं जातिशतं [जातिसहस्रं] जातिशतसहस्रमनेकान्यपि जातिशतानि अनेकान्यपि जातिसहस्राणि अनेकान्यपि जातिशतसहस्राणि संवर्तकल्पमपि विवर्तकल्पमपि संवर्तविवर्तकल्पमपि अनेकानपि संवर्तकल्पान् [अनेकानपि विवर्तकल्पान्] अनेकानपि संवर्तविवर्तकल्पान् समनुस्मरति। अमी नाम ते भवन्तः सत्त्वा यत्राहमेवंनामा आसम्। एवंजात्य एवंगोत्र एवमाहार एवंसुखदुःखप्रतिसंवेदी एवंदीर्घायुः एवंचिरस्थितिक एवमायुष्पर्यन्तः। सोऽहं तस्मात्स्थानाच्च्युतः अमुत्रोपपन्नः। तस्मादपि च्युतोऽमुत्रोपपन्नः। तस्मादपि च्युतः इहोपपन्न इति। साकारं सोद्देशमनेकविधं पूर्वनिवासमनुस्मरति।

किं मन्यसे महाराज न त्वेवं सति मया दर्शितं सांदृष्टिकं श्रामण्यफलम्। तथ्यं भदन्त एवं सति भगवता दर्शितं सांदृष्टिकं श्रामण्यफलम्।

1 For ॰दपीहागच्छेत्   2 For ॰दपीहागत

स एवं समाहिते चित्ते परिशुद्धे पयवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते च्युत्युपपादज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्त्वान् पश्यति च्यवमानानुपपन्नमानानपि[1] सुवर्णानपि दुर्वर्णानपि हीनानपि प्रणीतानपि सुगतिमपि गच्छतो दुर्गतिमपि यथाकर्मोपयोगात्सत्त्वा[न्] यथाभूतं प्रजानाति। अमी भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागता वाङ्मनोदुश्चरितेन समन्वागता आर्याणामपवादका मिथ्यादृष्टयो मिथ्यादृष्टिकर्मधर्मसमादानहेतोस्तद्धेतु तत्प्रत्ययं कायस्य भेदात्परं मरणमपायदुर्गतिविनिपातं नरकमुपपद्यन्ते। अमी वा पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वागता वाङ्मनःसुचरितेन समन्वागता आर्याणामनपवादकाः सम्यग्दृष्टयः सम्यग्दृष्टिकर्मधर्मसमादानहेतोस्तद्धेतु तत्प्रत्ययं कायस्य भेदात्सुगतौ स्वर्गलोके देवेषूपपद्यन्ते।

स एवं समाहिते चित्ते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते आस्रवक्षयज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स इदं दुःखम् आर्यसत्यमिति यथाभूतं प्रजानाति। अयं दुःखसमुदयोऽयं दुःखनिरोधः। इयं दुःखनिरोधगामिनी प्रतिपत् आर्यसत्यमिति यथाभूतं प्रजानाति। तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते। भवास्रवादविद्यास्रवाच्चित्तं विमुच्यते। विमुक्तस्य

1 For उत्पद्यमानान्

विमुक्तमेव ज्ञानदर्शनं भवति। क्षीणा मे जातिः व्युषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानातीति। तद्यथा ग्रामस्य वा निगमस्य वा नातिदूरे गम्भीरे स्यादुदकह्रदः अच्छो विप्रसन्नोऽनाविलः। तत्र चक्षुष्मान्पुरुषस्तीरे निषण्णः पश्येत् शर्करान् वा कठल्लानि वा मत्स्यान्वा कूर्मान्वा शुक्तीर्वा शम्बूकान्वा। एवमेव स एवं समाहिते परिशुद्धे पर्यवदाते अनङ्गणे विगतोपक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते आस्रवक्षयज्ञानसाक्षात्क्रियायामभिज्ञायां चित्तमभिनिर्णामयति। स इदं दुःखम् आर्यसत्यमिति यथाभूतं प्रजानाति। अयं दुःखसमुदयः। अयं दुःखनिरोधः इयं दुःखनिरोधगामिनी प्रतिपत् आर्यसत्यमिति यथाभूतं प्रजानाति। तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते। भवास्रवादविद्यास्रवाच्चित्तं विमुच्यते। विमुक्तस्य विमुक्तमेव ज्ञानदर्शनं भवति। क्षीणा मे जातिः व्युषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानातीति।

किं मन्यसे महाराज न त्वेवं सति मया दर्शितं सांदृष्टिकं श्रामण्यफलम्। तथ्यं भदन्त एवं सति भगवता दर्शितं सांदृष्टिकं श्रामण्यफलम्।

एवमुक्ते राजा मागधोऽजातशत्रुर्वैदेहीपुत्रः प्रारोदीदश्रूणि वर्षयन्। अथ राजा मागधोऽजातशत्रुर्वैदेहीपुत्रः चीवरकर्णिकेनाश्रूण्युत्सृज्य भगवतः पादयोर्निपत्य भगवन्तमिदमवोचत्। अत्ययो भगवन्नत्ययः सुगत यथा बालो यथा मूढो यथा अव्यक्तो यथा अकुशलः येन मया पापमित्रसहायेन पापमित्रवशंगतेन

पापमित्रोपगूढकेन पिता धार्मिको धर्मराजो जीविताद् व्यपरोपितः। तस्य मम भदन्त अत्ययं जानतोऽत्ययं पश्यतोऽत्ययमत्ययतः प्रतिगृह्णीष्वानुकम्पामुपादाय। तथ्यं त्वं महाराज अत्ययमत्ययतः तद्यथा बालो यथा मूढो यथा अव्यक्तो यथा अकुशलो येन त्वया पापमित्रसहायेन पापमित्रवशंगतेन पापमित्रोपगूढेन पिता धार्मिको धर्मराजो जीविताद्व्यपरोपितः। यतश्च त्वं महाराज अत्ययं जानासि अत्ययं पश्यसि च दृष्ट्वादेशयसि। आयत्यां च संवरमापद्यसे वृद्धिरेव ते प्रतिकांक्षितव्या कुशलानां धर्माणां न हानिः। तत्कस्य हेतोः। यः कश्चिन्महाराज अत्ययं जानाति अत्ययं पश्यति तं दृष्ट्वादेशयति आयत्यां च संवरमापद्यते वृद्धिरेवास्य प्रतिकांक्षितव्या कुशलानां धर्माणां न हानिः। एवमेव त्वं महाराज यतश्चात्ययं जानासि अत्ययं च पश्यसि दृष्ट्वादेशयसि आयत्यां च संवरमापद्यसे वृद्धिरेव ते प्रतिकांक्षितव्या कुशलानां धर्माणां न हानिः।

अथ राजा मागधोऽजातशत्रुर्वैदेहीपुत्रो भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। अधिवासयति भगवान् राज्ञो मागधस्याजातशत्रोर्वैदेहीपुत्रस्य तूष्णींभावेन। अथ राजा मागधोऽजातशत्रुर्वैदेहीपुत्रो भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। अथ भगवानचिरप्रक्रान्तं राजानं मागधमजातशत्रुं वैदेहीपुत्रं विदित्वा भिक्षूनामंत्रयते स्म। क्षतो भिक्षवो

राजा मागधोऽजातशत्रुर्वैदेहीपुत्रः उपहतो येन पापमित्र-सहायेन पापमित्रवशंगतेन पापमित्रोपगूढेन पिता वा धार्मिको धर्मराजो धर्मस्थितो महाराजो जीविताद्व्यपरोपितः। स चेद्भिक्षवो राजा मागधेनाजातशत्रुणा वैदेहीपुत्रेण पिता धार्मिको धर्मराजो धर्मस्थितो महाराजो जीविताद्व्यपरोपितोऽभविष्यत् स्थान-मेतद्विद्यते यदस्मिन्नेवासने निषण्णेन [1]चत्वारि आर्यसत्यान्यभिसमि-तान्यभविष्यत्। एवं क्षतो भिक्षवो राजा मागधोऽजातशत्रुर्वैदेही-पुत्र एवमुपाहतः[2]। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यम्। दग्ध-स्थूणायामपि[3] चित्तं न प्रदूषयिष्यामः प्रागेव सविज्ञानके काये। इत्येवं वो भिक्षवः शिक्षितव्यम्।

अथ राजा मागधोऽजातशत्रुर्वैदेहीपुत्रस्तामेव रात्रिं शुचि-प्रणीतं खादनीयभोजनीयं समुदानीय काल्यमेवोत्थायासनानि प्रज्ञप्योदकमणीन्प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति। समयो भदन्तः सज्जं भक्तं यस्यैवेदानीं भगवान्कालं मन्यते। अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसंघपुरस्कृतो येन राज्ञो मागधस्याजातशत्रोर्वैदेहीपुत्रस्य भक्ताभिसारस्तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने न्यषीदत्। अथ राजा मागधोऽजातशत्रुर्वैदेहीपुत्रः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन

1 Tib. 447b, l. 1 adds तद्यथा दुःखं समुदयं निरोधं मार्गम्।

2 The (Pāli) *Sāmaññaphala-sutta* ends here.

3 Tib. 447b, l. 3: གང་སྡོང་དུམ་ཚིག་པ་ལ་ཡང་ངན་སེམས་མི་བསྐྱེད་ན།

खादनीयभोजनीयेन स्वहस्तं सन्तर्पयति संप्रवारयति। अनेकपर्यायेण शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्प्य संप्रवाय भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय।

अथ भगवान् राज्ञो मागधस्याजातशत्रोर्वैदेहीपुत्रस्य तद्दानमनया अभ्यनुमोदन[गाथ]याभ्यनुमोदते।

अग्निहोत्रमुखा यज्ञाः सावित्री च्छन्दसां मुखम्।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम्॥
नक्षत्राणां मुखं चन्द्र आदित्यस्तपतां मुखम्।
ऊर्ध्वं तिर्यगधश्चापि यावती जगतो गतिः।
सदेवकेषु [लोकेषु] संबुद्धो ह्रीज्यतां वरः[1]॥

अथ भगवान् राजानं मागधमजातशत्रुं धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः।

यदा भगवता राजा अजातशत्रुर्वैदेहीपुत्रोऽमूलकया[2] श्रद्धया प्रतिष्ठापितः तदा यदा[3] भगवन्तं हर्म्यतलस्थो हस्ति-

1 See Tib. 448a, l. 7. Cf. *Suttanipāta*, vv. 568, 569:

अग्गिहुत्तमुखा यञ्ञा सावित्ति छन्दसो मुखम्।
राजा मुखं मनुस्सानं नदीनं सागरो मुखम्॥
नक्खत्तानं मुखं चन्दो आदिच्चो तपतं मुखम्।
पुञ्ञं आकंखमानानं संघो वे यजतं मुखम्॥ इति।

2 Ms. अमूल्यकया; Tib. 448b, l. 3: གཞི་མེད་པའི་དད་པ་ལ་བཞག་པ།

3 *Ibid.*, l. 3: གལ་ཏེ=चेत्

स्कन्धावरूढो वा पश्यति तदात्मानं मुञ्चति[1]। यावदपरेण समयेन हस्तिस्कन्धावरूढेन भगवान् दृष्टः। तेनात्मा मुक्तः। भगवता ऋद्धया प्रतीष्टः[2]। पौरुषेयमन्तर्जनं चामन्त्रयते। यत् खलु भवन्तः जानीयात्[3]। अद्याग्रेणाहं भगवतः श्रावको भगवन्तं शरणं गतः। अद्याग्रेणानावृतं द्वारं भगवतः श्रावकाणां भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानामावृतं द्वारं देवदत्तस्य श्रावकाणां चेति।

यावदपरेण समयेन देवदत्तो राज्ञोऽजातशत्रोर्गृहं प्रवेष्टुमारब्धो दौवारिकेणाभिहितः। तिष्ठ मा प्रवेक्ष्यसीति। किं कारणम्। देवेनाज्ञा दत्ता। अद्याग्रेणाहं भगवतः श्रावको भगवन्तं शरणं गतः। अद्याग्रेणानावृतं द्वारं भगवतः श्रावकाणां भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानाम्। आवृतं तु देवदत्तस्य देवदत्त-श्रावकाणां देवदत्त-श्राविकाणां चेति। स च द्वारे विधारितस्तिष्ठति। उत्पलवर्णा च भिक्षुणी पिण्डपातमादाय राजकुलान्निष्क्रामति। देवदत्तस्यैतदभवत्। अस्या मुण्डिकायाः श्रामणिकाया एतत्कर्म। अनया राजा अजातशत्रुः [4]सान्तःपुरकुमारेभ्यो भिन्नो येन मे समवस्थेति[5] विदित्वोत्पलवर्णामिदमवोचत्। किं मया तवापराद्धं येन त्वया मम भैक्ष्याककुलं दूरीकृतमिति। स तां प्रघातयितुमारब्धः। सा प्रघात्यमाना करुणदीनविलपितै[6]रक्षरै-

1 *Ibid.*, l. 4: བདག་ཉིད་མཆོང་བར་བྱེད་དོ།

2 Ms. प्रतीष्ठः ; Tib. 448b, l. 5: བླངས་སོ།

3 For जानीयुः।

4 Tib. 449a, l. 5: ཉེ་མི་དང་།

5 Ms. समवस्थितेति।

6 Ms. ०विलम्बितै०

रुवाच। आर्ये शान्तं किमहमेवं करिष्ये। त्वं तावद्भगवतो भ्राता पुनः शाक्यकुलात्प्रव्रजितः। नाहमेवं करोमि क्षमस्वेति। तथाप्युच्यमानेन देवदत्तेन तस्य शिरसि खटप्रहारो दत्तः। सा मर्मवेदनाभ्याहता। जीवितसंस्कारानधिष्ठाय आयुःसंस्कारा-[न]नुत्सृज्य [वीर्य]मवलम्ब्य[1] भिक्षुणीवर्षकं गता। भिक्षुण्यस्तां तथाविधां दृष्ट्वा कथयन्ति। अहो आर्ये किमिदमिति। सा कथयति। भगिन्यः सर्वसंस्कारा अनित्याः। सर्वधर्मा अनात्मानः। शान्तं निर्वाणम्। युष्माभिः कुशलेषु धर्मेष्वप्रमादः करणीयः। देवदत्तेन तृतीयमानन्तर्यं कृतम्। परिनिर्वास्या-मीति। ततोऽसौ भिक्षुणीसंघस्य पुरस्ताद्विचित्राणि प्रातिहार्याणि कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृता।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्त देवदत्तेनोत्पलवर्णा भिक्षुणी करुणकरुणं विप्रलपन्ती खटप्रहारेण प्रघातिता इति। भगवानाह। न भिक्षव एतर्हि यथा अतीतेऽप्यध्वन्यस्याः करुणकरुणं विप्रलपन्त्या हत्वा मांसं भक्षितम्। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके गृहपतिः प्रतिवसति। तस्य एडकानां वर्गः। तच्चारणाय एडकपालो ग्रामाद्बहिर्निर्गतः। ततश्चारयित्वा सूर्यस्यास्तंगमनकालसमये कर्वटकं प्रवेशयितु-मारब्धः। तत्रान्यतरा जीर्णेडिकां पृष्ठतोऽवलम्बमानो वृको गच्छति। तावद्वृकेण गृहीता। कथयति।

1 Tib. 449b, l. 2: བརྩོན་འགྲུས་ལ་གནས་ཏེ །

कच्चित्ते मातुल क्षेमं सुखं कच्चित्तु मातुल ।
एकः कश्चिदरण्येऽस्मिन् सुखं विन्दसि मातुल ॥ इति ।

सोऽपि कथयति ।

मर्दित्वा मम लाङ्गूलं खोसयित्वा च वालधिम्[1] ।
अथ मातुलवादेन कुल मोक्ष्यसि एडक ॥ इति ।

एडिका पुनराह ।

पृष्ठतस्तव लाङ्गूलं पुरतो ह्यागता अहम् ।
अथ केनाभ्युपायेन लाङ्गूलं मर्दितं मया ॥ इति ।

वृको भूयः कथयति ।

चत्वारस्तु इमे द्वीपाः ससमुद्राः सपर्वताः ।
सर्वेषु मम लाङ्गूलमथ केन त्वमागता ॥ इति ।

एडिका प्राह ।

पूर्वमेव मया भद्र ज्ञातीनामन्तिकाच्छ्रुतम् ।
सर्वत्र तव लाङ्गूलमाकाशेनाहमागता ॥ इति ।

वृकः प्राह ।

आकाशेन पतन्त्या वै त्वया मे अजरेडके ।
त्रासितो मृगसंघोऽसौ यो मे भक्ष्य उपागतः ॥ इति ।
एवं तस्याः प्रलपन्त्या उत्पत्य पापकर्मणा ।
एडिकायाः शिरश्छिन्नं हत्वा मांसं च भक्षितम् ॥

भगवानाह । किं मन्यध्वे भिक्षवो योऽसौ वृकः एष एव
र देवदत्तस्तेन कालेन तेन समयेन । या साजरेडिका एषैव सा

1 Tib. 450a, l. 4: འཛུག་མའི་སྐྲ་ཡང་ཕྱིས་ནས་ནི །

उत्पलवर्णा तेन कालेन तेन समयेन। तदाप्येषा करुणकरुणं विलपन्ती प्रघातिता। एतर्ह्यप्येषा करुणकरुणं विप्रलपन्ती प्रघातिता।

अथ देवदत्तस्यैतदभवत्। बहुशो मया भगवता पराक्रान्तमानन्तर्यत्रयं कृतम्। भगवतः शिला क्षिप्ता रुधिरोत्पादः कृतः इदं प्रथममानन्तर्यम्। संघो भिन्नः इदं द्वितीयम्। उत्पलवर्णा जीविताद्व्यपरोपिता इदं तृतीयम्। न च सर्वज्ञत्वमवाप्तम्। न चान्या काचित्कार्यसिद्धिरवाप्ता। नान्यत्वेदानीं नरकेषूपपत्तव्यमिति विदित्वा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः।

यावत् पूरणस्तं प्रदेशमनुप्राप्तः। स कथयति। देवदत्त किमर्थं करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसीति। स कथयति। कथमहं न चिन्तापरस्तिष्ठामि। येन मया द्वेषावेशाद्भगवतो बहुशः पराक्रान्तम्। त्रीणि चानन्तर्यकर्माणि कृतानि। चिरमवीचौ महानरके वस्तव्यं भविष्यतीति। स कथयति[1]। [ज्ञातं मया त्व]मेकः शाक्यानां पंडित इति। त्वमपि मूर्खः। कुतः परलोको येन त्वमेवं चिन्तापरो व्यवस्थितः। यदि परलोकः स्यात् त्वया ईदृशं कर्म कृतमिति वयमपि त्वदर्थं चिन्तापरस्तिष्ठेम। तत्प्रत्ययनार्थं[2] च तेन तस्य पुरस्तात्कुंडिका भग्ना। [पश्य एवं] तावल्लोकः। एतां प्रतिसंदधातु[3]। सर्वथा मा त्रासपरो भव[4]।

1 Tib. 451a, l. 3. 2 Tib. 451a, l. 5: དེ་ཡིད་ཆེས་པར་བྱ་བའི་ཕྱིར །

3 Tib. 451b, l. 5: རེ་ཞིག་ལྷ་དང་བཅས་པའི་འཇིག་རྟེན་གྱིས་འདིར་སླར་འབྱོར་བར་བྱོས་ཤིག ། 4 *Ibid.*, l. 6: ཡེ་བག་མ་ཚ་ཞིག །

ास्त्यत्र कर्ता वा कारको वा। अपि तु गच्छ कपिलवस्तुं नगरम्।
त्वा राज्यं कारय। वयं तवाग्रे श्रावका भविष्याम इति।
त्र देव[दत्त] आर्यापवादिकां मिथ्यादृष्टिं प्रतिलब्धवान्। यया
त्रेण सर्वकुशलमूलानि समुच्छिन्नानि। तत्र भगवान्भिक्षूनामंत्र-
ते स्म। समुच्छिन्नानि भिक्षवो देवदत्तेन कुशलमूलानि।
व[द]हं भिक्षवो देवदत्तस्य शुक्लं धर्ममद्राक्षम्। न तावन्मया
वदत्तो व्याकृत इत्यपि देवदत्त आपायिको नैरयिकः कल्पस्थो-
चिकित्स्य इति। तद्यथा ग्रामस्य वा निगमस्य वा नातिदूरे गूथा-
ारं स्यादूर्ध्वं साधिकपौरुष्यम्[1]। तत्र कश्चिदेव पुरुषः सशिरः-
णिपादो मग्नः स्यात्। तस्य कश्चिदेव पुरुष उपपद्येत दीर्घ-
ालमर्थकामो हितकामः सुखकामः स्पर्शकामो योगक्षेमकामः।
तं गूथाधारं सामन्तकेनानुपरिवार्यागच्छेदप्येव लभेयास्य
ुषस्य कंचिदेव प्रदेशं गूथेनाम्रक्षितं[2] यत्रैनं गृहीत्वोद्धरेयमिति।
तत्र सामन्तकेनानुपरिवार्यागच्छन्न लभते तस्य पुरुषस्य
ंचिदेव प्रदेशं गूथेन म्रक्षितम्। अन्ततः पाणितलमात्रमपि
त्रैनं गृहीत्वोद्धरेत्। एवमेव यतश्चाहं भिक्षवो देवदत्तस्य शुक्लं
र्ममद्राक्षं न तावन्मया देवदत्तो व्याकृत इत्यपि देवदत्त
ापायिको नैरयिकः कल्पस्थोऽचिकित्स्य इति। यतश्चाहं
वदत्तस्य शुक्लं धर्मं नाद्राक्षम् अन्ततो बालाग्रकोटीमात्र-
पि ततो मया देवदत्तो व्याकृत इत्यपि देवदत्त आपायिको

1 Ms. गूथोडीरं। Cf. *Majjhima Nikāya*, I, p.74: गूथकूपो साधिकपोरिसो।

2 Ms. मृक्षितं

नैरयिकः कल्पस्थोऽचिकित्स्य इति। त्रिभिर्भिक्षवः असद्धर्मैः समन्वागतो देवदत्त आपायिको नैरयिकः कल्पस्थोऽचिकित्स्यः। कतमैस्त्रिभिः। पूर्वमेव भिक्षवो पापेच्छोऽभूत् पापिकया इच्छया वशगतः। यद्देवदत्तः पूर्वमेव पापेच्छोऽभूत् पापिकया इच्छया वशगतोऽनेन प्रथमेनासद्धर्मेण समन्वागतो देवदत्त आपायिको नैरयिकः कल्पस्थोऽचिकित्स्यः। पुनरपरं भिक्षवः [पूर्वमेव] देवदत्तः पापमित्रोऽभूत् पापसहायः पापसंपर्कः। यद्देवदत्तः [पूर्वमेव] पापमित्रोऽभूत् पापसहायः पापसंपर्कोऽनेन द्वितीयेनासद्धर्मेण समन्वागतो देवदत्त आपायिको नैरयिकः कल्पस्थोऽचिकित्स्यः। पुनरपरं देवदत्तोऽल्पमात्रावरमात्रकेण विशेषाधिगमेनान्तरा विषादमापन्नः[1] सत्युत्तरे करणीये। यद्देवदत्त अल्पमात्रावरमात्रकेणवि शेषाधिगमेनान्तरा विषादमापन्नः[2] सत्युत्तरे करणीये। अनेन तृतीयेनासद्धर्मेण समन्वागतो देवदत्त आपायिको नैरयिकः कल्पस्थोऽचिकित्स्यः।

मा जातु कश्चिल्लोकेऽस्मिन् पापेच्छा उपपद्यताम्।
तदनेनैव जानीध्वं पापेच्छानां हि या गतिः॥
पंडितोऽपि समाख्यातो भावितात्मा हि संमतः।
श्रिया देदीप्यमानो देवदत्त इति विश्रुतः॥
स वै प्रमादमनुयुज्यासाद्येह तथागतम्।
व्याकृतस्तु स कल्पस्थः संबुद्धेन प्रजानता॥

1 Tib. 452a, l. 7: གོང་དུ་བྱ་བ་ཡོད་བཞིན་དུ་བར་དུ་སྙིང་ཞུག་པར་གྱུར་ཏེ།

2 I. e. gets wearied at heart.

कदर्यः पापसंकल्पो मिथ्यादृष्टिरनादरः ।
अवीचिनरकं प्राप्तश्चतुर्द्वारं हि यं विदुः ॥
अद्रुग्धस्य हि यो द्रुह्येत्कर्म पापमकुर्वतः ।
तमेव पापं स्पृशति लोकेऽस्मिंश्च परत्र च ॥
समुद्रं विषकुम्भेन यो दूषयितुमुत्सहेत् ।
न स तेन विदूष्येत [महासागरभैरवः[1] ॥
तथा दुर्वचनैर्येन दूष्यते हि तथागतः] ।
सम्यग्दर्शी शान्तचित्तो [दूषयन्तं न रक्षति] ॥
तादृग्मित्रं प्रकुर्वीत तं वै सेवे[त] पंडितः ।
तादृशं सेवमानस्य श्रेयः स्यान्न तु पापकम् ॥

ततो देवदत्त आर्यापवादिकां मिथ्यादृष्टिं प्रतिलभ्य समुच्छिन्न-
शलमूलो नास्ति परलोक इति निश्चयं लब्ध्वा पंचभिः पदैः
ावकाणां धर्मं देशयति । श्रमणो भवन्तो गौतमो दधि-

Ms. drops about a line here. It runs as follows:
न स तेन विदूष्येत भावितात्मा हि संमतः ॥ सम्यग्दर्शी शान्तचित्तो वादेयस्मिन्न रोहति ।
:ग्मित्रं प्रकुर्वीत etc.

Tib. 452b, l. 7-453a, l. 1:

ཆུ་གཏེར་འཇིགས་རུང་ཆེན་པོ་དེ། །
དེ་ཡིས་དེ་སྐྱོན་མི་ཕྱིན་ལྟར། །
གང་ཞིག་དེ་བཞིན་གཤེགས་པ་ལ། །
ཁ་ཟེར་སྐྱོན་འབྱིན་དེ་དང་འདྲ། །
ཡང་དག་གཟིགས་པ་ཞི་བའི་ཐུགས། །
གང་ལ་ཕྱུར་ཀས་མི་རྫི་བ། །

क्षीरं परिभुंक्ते। अस्माभिरद्याग्रेण न परिभोक्तव्यम्। यत् कारणम्। अतो निदानं वत्सकाः क्लाम्यन्ति। श्रमणो गौतमो मांसं परिभुंक्ते। अस्माभिर्न परिभोक्तव्यम्। यत्कारणम्। अतो निदानं प्राणिनो घात्यन्ते। श्रमणो गौतमो लवणं परिभुंक्ते। अस्माभिर्न परिभोक्तव्यम्। रेणुसंभूतमिति कृत्वा। श्रमणो गौतमश्छिन्नदशानि वस्त्राणि धारयति। अस्माभिर्दीर्घदशानि वस्त्राणि धारयितव्यानि। यत्कारणम्। अतो निदानं कुविन्दानां पुरुषकारो ध्वंस्यते। श्रमणो गौतमोऽरण्ये प्रतिवसति। अस्माभिर्ग्रामे वस्तव्यम्। यत्कारणम्। अतो निदानं मनुष्याणां देयधर्मा न परिभुज्यन्त इति।

अन्तरोद्दानम्। **क्षीरं मांसं लवणं वस्त्रमारण्यकेन च।**

यावद्भगवान् जनपदचारिकां चरन् श्रावस्तीमनुप्राप्तः। देवदत्तः संलक्षयति। बहुशो मया श्रमणस्य गौतमस्यापकृतम्। न च शक्तः श्रमणं गौतमं प्रघातयितुम्। गच्छामि दारापमर्दमस्य करोमीति। स कपिलवस्तुं गतः। तेन तत्र गत्वा दाराय[1] सन्दिष्टम्। श्रमणो गौतमः प्रव्रजितः। अहं त्वदर्थमागतः। सा त्वं मया सार्धं परिचारयेति। तया गोपिकया समाख्यातम्। सा कथयति। त्वमेनं संदिश। बोधिसत्त्वोऽस्माकं हस्तग्रहणं सहते यदि त्वमपि सहसे आगच्छ। स निर्लज्जतया अन्तःपुरं प्रविष्टः। तेन सोपानमभिरुहता गोपिका दृष्टा। तस्याः समुपहासमङ्गुलीकर्तुमारब्धः। सा महानग्नबला। तया वामेन

1 For दारेभ्यः।

[..]गणिना तस्याङ्गुल्यो निपीडिताः। शोणितमागतम्। ततस्तया-
[..]तौ क्रीडापुष्करिण्यां क्षिप्तः। तेन पतता नादो मुक्तः। श्रुत्वा
शाक्याः प्रधाविताः। देवदत्तो बोधिसत्त्वस्यान्तःपुरं प्रविश्य
दारापमर्दं करोतीति। तैरसौ क्रीडापुष्करिण्यां पतितो दृष्टः।
[..]ते संजल्पं कर्तुमारब्धाः। प्रघातयाम एतमिति। भूयः कथयन्ति।
अस्य हतस्य हन्यते। व्याकृत एवायं भगवता इत्यपि देवदत्त
आपायिको नैरयिकः कल्पस्थोऽचिकित्स्यः। तैः उत्सृष्टः।
[..]त्रसच्छिद्रेण[1] निष्पलायितः। तस्य वस्त्रं पाटितं द्विखण्डं
जातम्। स संलक्षयति। शोभनम्। अनेन कल्पन्तां मे श्रावका
निर्वसननिवासमिति।

सोऽपरेण समयेन शाक्यान्संनिपात्य कथयति। मां राज्ये
प्रतिष्ठापयतेति। ते कथयन्ति। बोधिसत्त्वस्यात्रान्तःपुरमवतिष्ठते।
[..]त्वं तावत्स्वीकुरु। ततः पश्चाद्राज्यं कारयिष्यसीति। एवमुक्तो
देवदत्तः शाक्येभ्यो विगतशंको हर्म्यतलावरूढः। यशोधरायाः
[..]सकाशमुपसंक्रम्याञ्जलिं कृत्वा कथयति। नियुज्येऽहं तव। प्रसादं
कुरु ममाग्रमहिषी। कपिलवस्तुनि राज्यं [का]रयामीति। यशो-
[..]धरा प्रस्कन्दबलिनी। तदा श्रीपर्यङ्कादुत्थायोभयोर्हस्तयोर्गृहीत्वा
जानुभ्यां पातितः। तस्य हस्तयोः रुधिरं स्यन्दितुमारब्धम्। स
दुःखवेदनाभ्याहतो यशोधरयाभिहितः। निरपत्रपस्त्वं[2] मूर्खश्च।
यस्त्वं मम हस्तग्रहणमपि न शक्तः सोढुं स मां प्रार्थयसे। न चक्र-

1 Tib. 454a, l. 5: སྦྱོར་ཁང་ནས་བྱུང་སྟེ། =escaped through a drain.

2 Tib. 454b, l. 3: ངོ་ཚ་མེད་ཅིང་གླེན་པོ་ཡིན་ནོ།

वर्ती वास्माकं भर्ता स्याद् बोधिसत्त्वो वेति। ततस्तयावमानितोऽन्तःपुरान्निर्गतः। शाक्यैरुक्तो गच्छ भगवन्तं क्षमय। यदि ते भगवान् क्षमति पश्चाद्राज्यं कारयिष्यसीति। स वत्सनाभस्य[1] परमतीक्ष्णस्य विषस्य नखान्पूरयित्वा येन भगवांस्तेनोपसंक्रान्तः। यदि मे श्रमणगौतमः क्षमिष्यतीति एवं कुशलम्। नोचेत्क्षमिष्यति तत्रैवास्य पादयोर्निपतितो नखविषपूर्णौ पादौ करिष्यामीति विदित्वा भगवतः पादयोर्निपत्य भगवन्तमिदमवोचत्। क्षमस्व भगवन्निति। भगवान् संलक्षयति। कीदृशेन चित्तेनायं मामुपसंक्रान्त इति। पश्यति वधकचित्तेन। ततो भगवता नखौ यावज्जानुमण्डलमुपादाय स्फटिकमय्यौ पादौ निर्माय तूष्णीमवस्थितः। स भगवतः पादौ नखैर्वेद्धुमारब्धः। तस्य नखा भग्नाः। स प्रतिविभिन्नः कथयति। त्वां शरणं गच्छामि। यस्मादुक्तं त्वया 'ये बुद्धं शरणं गच्छन्ति न ते गच्छन्ति दुर्गतिमि'ति। यदि दुर्गतिं गमिष्यामि इदं ते मृषा इति। [2]अभ्युदीर्णपरिपूर्णानि हि कर्माणि। शरीरस्य पतनं न लक्ष्यते। स जीवन्नेवावीचिकाभिर्ज्वलति। समन्ततो[3]विक्रोष्टुमारब्धो दह्ये आनन्द [दह्ये] आनन्देति। अथायुष्मानानन्दः कारुणिको मैत्र्यात्मकः स्वजनवत्सलः। स कथयति। एहि देवदत्त तथागतमर्हन्तं बुद्धं शरणं गच्छेति। तेन दुःखवेदनाभिभूतेन

1 Tib. 454b, l. 6: པེ་ཙུ་ཀྱི་ལྡེ་བ་ལྷ་བུ་ཞེས་བྱ་བའོ།

2 Tib. 455a, l. 6: ཤིན་ཏུ་དྲག་པོའི་ལས།

3 Ms. लिंगितो। Tib. 455a, l. 7: ཀུན་ནས་ཨོག་ནས།

त्यक्षकर्मदर्शिना [1]आशयचित्तमुत्पादितं [च] वाग्भाषिता। एषोऽह-
स्थितोऽपि[2] बुद्धं भगवन्तं शरणं गच्छामीत्युक्त्वा स्वशरीरेणा-
ीचौ महानरके पतितः।

तत्र भगवान् भिक्षूनामन्त्रयते स्म। प्रतिसंधितानि भिक्षवो
वदत्तेन कुशलमूलानि। कल्पमवीचौ महानरके स्थित्वा
त्येकां बोधिं साक्षात्करिष्यति। अस्थिमान् नाम प्रत्येकबुद्धो
विष्यति। सोऽभिसंबुद्धमात्रः पिण्डपातमेकान्ते स्थापयित्वा
स्तौ निर्मर्दयन्समन्वाहरिष्यति[3]। किमर्थमहं दीर्घकालं संसारे
संसृत इति। समन्वाहरन् ज्ञास्यति। जन्मनि जन्मनि मया
भगवतः पराक्रान्तं बोधिसत्त्वभूतस्यापि सर्वज्ञेयवशिताप्राप्तस्यापि
च्च लाभसत्कारहेतोरिति। स तमप्येकपिण्डपातमपरिभुज्यो-
परिविहायसमभ्युद्गम्य ज्वलन-तपन-वर्षण-विद्योतन-प्रातिहार्याणि
कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वास्यतीति।

आचरितं शारिपुत्रमौद्गल्यायनयोः कालेन कालं नरक-
चारिकां चरितुम्। अथायुष्मान् शारिपुत्र आयुष्मन्तं महामौद्ग-
ल्यायनमिदमवोचत्। आयुष्मन् महामौद्गल्यायन भगवता देवदत्तः
प्रत्येकबोधौ व्याकृतः। एह्यावामवीचिं महानरकं गत्वा देवदत्त-
माश्वासयाव इति। अथायुष्मन्तौ शारिपुत्र-महामौद्गल्यायनौ

1 Ms. श्चासतश्चित्त० ; Tib. 455b, l. 2: བསམ་པ་ཐག་པ་ནས། |

2 *Ibid.* རུས་པའི་ཁོང་ནས། |=from skeleton ; cf. *Jātaka*, IV, p. 158: इमेहि
ट्ठीहि तमग्गपुग्गलं......सरणमुपेमि।

3 Tib. 455b, l. 5: ལག་པ་འཁྲུ་ཞིང་སེམས་པ་ལ་ཞུགས་པ། |

अवीचिमहानरकं गतौ। तत्रायुष्मान् शारिपुत्र आयुष्मन्तं महा-मौद्गल्यायनमामन्त्रयते। समन्वाहर आयुष्मन् महामौद्गल्यायन नारकान् सत्त्वानिति। आयुष्मन्महामौद्गल्यायनस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते मुसलमात्राभिर्धाराभिर्वर्षितु-मारब्धः। तदुदकमावीचिकाभिर्ज्वालाभिरन्तरा पर्यादीयते। ईषामात्राभिरक्षमात्राभिर्धाराभिर्वर्षितुमारब्धः[1]। तदप्युदकमन्तरा पर्यादीयते। तत आयुष्मान् शारिपुत्र आधिमोक्षिकं समाधिं समापन्नः। सर्वं तत् नरकमुदके[न] प्लावितम्। आयुष्मता महामौद्गल्यायनेनोक्तम्। यो देवदत्तः स आगच्छत्विति। अनेकानि देवदत्तसहस्राण्यागतानि। आयुष्मान्महामौद्गल्यायनः कथयति। यो भगवतो भ्राता देवदत्तः स आगच्छत्विति। अथ देवदत्तो येनायुष्मन्तौ शारिपुत्र-महामौद्गल्यायनौ तेनोपसंक्रान्तः। उप-संक्रम्यायुष्मतोः शारिपुत्र-मौद्गल्यायनयोः पादयोर्निपतितः। ताभ्यामुक्तः। अस्ति ते कश्चित् कारणानां विशेष इति। स कथ-यति। या तावदावीचिके[षु] सत्त्वे[षु] साधारणता स्थिता [सा] एवास्तु मम। ये विशेषा[2] वर्तन्ते तान् शृणु।

1 Ms. ०वीचिकाभिर्धाराभिरन्तरान् पर्यादीयते। एषाभिर्मात्राभि० ; Tib. 456a, l. 7—456b, l. 1: ཆུ་དེ་མནར་མེད་པའི་མེ་ལྕེ་རྣམས་ཀྱི་བར་དུ་སྐམས་སོ། དེ་བཞིན་དུ་གཉའ་ཤིང་དང་ཤིང་རྟའི་སྲོག་ཤིང་ཙམ་གྱི་ཆར་རྒྱུན་དག་དབབ་པར་བརྩམས་པ་དང་། =The rain-water was dried up by the fiery flames of Avici, although it started raining like the yokes of oxen and the axles of chariots.

2 Ms. प्रातिमौद्गलिका वर्तन्ते।

अयस्मयाः पर्वता आगच्छन्ति। आदीप्ताः प्रदीप्ताः प्रज्वलिता ज्वालीभूताः। ते मां तिलवत्पेषयन्ति[1]। उभयतः अयोदन्तकैः ्चैरङ्गप्रत्यंगानि पाट्यन्ते। अयस्मयैर्मुद्गरैरादीप्तैः प्रदीप्तैः ज्वलितैरेकज्वालीभूतैस्तैर्मुहुर्मुहुः [शिर]श्चूर्ण्यते। चतुर्दिशं तन आगच्छन्ति। ते मां पिष्टवत्पेषयन्ति[2] इति।

आयुष्मन्तौ शारिपुत्र-मौद्गल्यायनौ कथयतः। यस्त्वं देवदत्त यसि। अयस्मयाः पर्वता आगच्छन्ति। आदीप्ताः प्रदीप्ताः ज्वलिता एकज्वालीभूतास्ते मां तिलवत्पेषयन्तीति। तथा हि त्वया वतो वधाय गृध्रकूटपर्वताच्छिलाः क्षिप्तास्तस्यैतत्कर्मणः फलम्।

यत्कथयसि। उभयतः [अयो]दन्तकैः क्रकचैरादीप्तैः प्रदीप्तैः ज्वलितैरेकज्वालीभूतैरङ्गप्रत्यङ्गानि पाट्यन्ते इति। तथाहि ा भगवतः श्रावकसंघो भिन्नः। तस्यैतत्कर्मणः फलम्।

यत्कथयसि। अयस्मयैर्मुद्गरैरादीप्तैः प्रदीप्तैरेकज्वाली- र्मुहुर्मुहुः शिरश्चूर्ण्यते इति। तथाहि त्वया उत्पलवर्णा भिक्षुणी न्ती खटप्रहारेण प्रघातिता। तस्यैतत्कर्मणः फलम्।

यत्कथयसि। चतुर्दिशं हस्तिन आगच्छन्तीति। ते मां वत्पेषयन्ति इति। तथा हि त्वया भगवतो वधाय वन- को हस्तिनाग उत्सृष्टः। तस्यैतत्कर्मणः फलम्।

अपि तु व्याकृतस्त्वं भगवता। किमिति भदन्त शारिपुत्र। संहतानि भिक्षवो देवदत्तेन कुशलमूलानि। कल्पमवीचौ

Tib. 456b, l. 6: ཏིལ་བཞིན་དུ་འཐག་པར་བགྱིད་དོ།

Tib. 457a, l. 1: འབྲས་ཕྱེ་བཞིན་དུ་འཐག་པར་བགྱིད་དོ།

महानरके स्थित्वाऽस्थिमान्प्रत्येकबुद्धो भविष्यतीति। स कथयति। भदन्त शारिपुत्र यद्येवमुत्सहे अहमेकपार्श्वेनावीचौ महानरके स्थातुमिति।

अथायुष्मन्तौ शारिपुत्र-महामौद्गल्यायनौ येन कोकालिकप्रभृतयस्तेनोपसंक्रान्तौ। यावत्कोकालिकस्य हि जिह्वा हलशतेन धार्यते। ब्रह्मणा सहांपतिना[1] कोकालिक उच्यते। कोकालिकाभिप्रसादय शारिपुत्र-मौद्गल्यायनयोर्भिक्ष्वोरन्तिके चित्तं पेशलयोः सब्रह्मचारिवत्सलयोरिति। एवमुक्ते कोकालिक आयुष्मन्तौ शारिपुत्र-मौद्गल्यायनौ दृष्ट्वा कथयति। इहाप्येतौ पापेच्छावागताविति। वाक्प्रव्याहरणकालसमनन्तरमेव कोकालिकस्य हलसहस्रेण जिह्वा पाटयितुमारब्धा। अथायुष्मन्तौ शारिपुत्र-मौद्गल्यायनावक[र]णीया ह्येते इति विदित्वा प्रक्रान्तौ येन पूरणः काश्यपस्तेनोपसंक्रान्तौ।

अथ पूरणः काश्यप आयुष्मतोः शारिपुत्र-मौद्गल्यायनयोः पादयोर्निपत्य कथयति। आर्य शारिपुत्र मया मिथ्याधर्मदेशनया महाजनकायो विप्रलब्धः। तस्य मे कर्मणो विपाकेन जिह्वायां पंच हलशतानि वहन्ति। यथा यथा च श्रावका स्तूपकारान्[2] कुर्वन्ति तथा तथा तीव्रवेदनां वेदयामि। तदर्हसि मदीयामवस्थां तेषां निवेद्य निवारयितुम्। मा तस्य स्तूपकारं करिष्यथेति। प्रतिज्ञया आयुष्मन्तौ शारिपुत्र-मौद्गल्यायनौ नरक-

1 Ms. सभांपति ; Tib. 457b, l. 5: མི་མཇེད་ཀྱི་བདག་པོ །

2 Tib. 458a, l. 4: མཆོད་པ་ལ་བགྱི་བ་བགྱིད་པ །

ारिकां चरित्वा ऋद्ध्या जम्बूद्वीपमनुप्राप्ता। ताभ्यां भगवतो
क्षूणां जनकायस्य देवदत्त-कोकालिक-पूरण-प्रभृतीनां नरको-
पन्नानामवस्था विस्तरेण समाख्याता।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं
प्रच्छुः। पश्य भदन्त देवदत्तो भगवतो वचनमवचनीकृत्यावीचौ
हानरके पतित इति। भगवानाह। न भिक्षव एतर्हि यथा
तीतेऽप्यध्वनि एवं मम वचनमवचनीकृत्य अनयेन व्यसन-
ापन्नः। श्रूयताम्।

भूतपूर्वं भिक्षवो नियतराश्यवस्थितो बोधिसत्त्वो गोषू-
पन्नो वृषो बभूव। स रात्रौ नगरान्निर्गम्य राजकीये माषक्षेत्रे
रति। दिवा नगरे तिष्ठति। यावत्तस्य [सकाशं] गर्दभः
ग्संक्रम्य कथयति। मातुल त्व[या सार्धं चरामीति]
पचितत्वङ्मांसशोणितः। न चाहं त्वां पश्यामि कदाचिच्च-
न्तमिति। स कथयति। भागिनेयाहं रात्रौ राजकीये
ाषक्षेत्रे चरामीति। स कथयति। अहमपि मातुल
या सार्धं चरामीति। स कथयति। भागिनेय त्वं
चाटो मानर्थं करिष्यसीति। स कथयति। मातुल गच्छामि
करिष्यामीति। तौ वाटं भंक्त्वा राजकीये माषक्षेत्रे निपतितौ।
र्दभस्तावत्तूष्णीमवस्थितो यावदशितं जातम्। ततः कथयति।
ातुल गायामि तावत्। वृषः कथयति। तिष्ठ ताव-
मुहूर्तं यावदहं निर्गच्छामीति। पश्चाद्यथेष्टं करिष्यसि।
त्युक्त्वा निष्पलायितः। गर्दभो गायितुमारब्धः। राजपुरुषैः

श्रुत्वा गृहीतः। भवन्तः अनेन गर्दभेन सर्वमिदं राजकीयं माषक्षेत्रं भक्षितम्। निग्रहमस्य कुर्म इति। तैः कर्णौ च्छित्त्वा उलूखलं च ग्रीवायां बद्ध्वा मुक्तः। इतश्चामुतश्च परिभ्रमन् वृषेण दृष्टः। स तं गाथया प्रत्यभाषत।

साधु गीतं सुष्ठु गीतं प्राप्तं गीतस्य तत्फलम्।
यतोऽस्मि तव गीतेन जातः कर्णविहीनकः॥
एवं हि तस्य भवति यो वाचं च न रक्षति।
भ्रमेदानीं कर्णहीनः उलूखलविभूषितः॥ इति।

सोऽपि गाथया प्रत्यभाषत।

तूष्णीं भव खण्डदन्त तूष्णीं भव जरद्गव।
त्वामप्यत्र गवेषन्तो दण्डहस्तास्त्रयो जनाः॥ इति।

भगवानाह। किं मन्यध्वे भिक्षवः योऽसौ वृषः अहमेव स तेन कालेन तेन समयेन। योऽसौ गर्दभ एष एव स देवदत्तस्तेन कालेन तेन समयेन। तदाप्येष मम वचनमवचनीकृत्यानयेन व्यसनमापन्नः। एतर्ह्यप्येष मम वचनमवचनीकृत्यानयेन व्यसनमापन्नः। पुनरपि यथैव मम वचनमवचनीकृत्यानयेन व्यसनमापन्नस्तच्छ्रूयताम्।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके गृहपतिः प्रतिवसति। तस्य वलीवर्दो लक्षणसंपन्नः। तेनासौ श्रमणब्राह्मणान्सुजनाननाथकृपणवनीपकान्भोजयित्वा यथेष्टप्रचारी उत्सृष्टः।

सोऽपरेण समयेन इतश्चामुतश्च परिभ्रमन् पंके मग्नोऽवस्थितः। तेन सूर्यास्तंगमनकालसमये श्रुतम्। समन्वेषमाणस्तस्य सकाशं

तः। स संलक्षयति। न शक्नोमि अहमधुना समुद्धर्तुम्। श्वः भाते समुद्धरिष्यामीति। वृषः कथयति। मम पुरस्तात्पाशं थापयित्वा गच्छ। यदि श्रृगाल आगमिष्यति तस्याहं श्रृङ्गे[ण] ाशं क्षेप्स्यामीति। स तस्य पुरस्तात्पाशं क्षिप्त्वा प्रक्रान्तः। याव-द्‌ावौ श्रृगाल आगतः। स कथयति। कोऽयं बिसान्युत्खनति ुण्डरीकानि चेति। वृषः कथयति। अहं निमग्नस्तिष्ठामीति। ृगालः संलक्षयति। भक्ष्यो मे प्रत्युपस्थित इति। स तमभिद्रवि-ुमारब्धः। वृषः कथयति। गच्छ त्वमस्मात् प्रदेशान्मा अन-ेन व्यसनमापत्स्यस इति। तथाप्यसौ निवार्यमाणोऽभिद्रवत्येव।

स वृषो गाथां भाषते।

नाहं बिसान्युत्खनामि पुण्डरीकानि नाप्यहम्।
सचेद्भक्षितुकामोऽसि पृष्ठतो गच्छ भक्षय॥ इति।

श्रृगालो[1] भक्षयामीति पृष्ठतो गतः। वृषेण श्रृङ्गे[ण] पाशः क्षिप्तः। श्रृगालो ग्रीवायां बद्धः। आकाशे प्रलम्बते। वृषो गाथां भाषते।

किं नटो नर्तको वा त्वमूरुशोभितदारकः।
ग्रामे विदर्श्यतां शिल्पमरण्ये नास्ति दायकः॥ इति।

श्रृगालोऽपि गाथां भाषते।

नाहं नटो नर्तको वा नापि शोभितदारकः।
दत्ता शक्रेण मे श्रेणी ब्रह्मलोकं व्रजाम्यहम्॥

1 Ms. throughout सृगालः।

भूयो वृषो गाथां भाषते।

न शक्रो ददाति निःश्रेणीं ब्रह्मलोकः कुतस्तव।
बद्धोऽसि कूटपाशेन न ते पश्यामि जीवितम्॥ इति।

किं मन्यध्वे भिक्षवो योऽसौ वृषः अहमेव स तेन कालेन तेन समयेन। योऽसौ शृगाल एष एव देवदत्तस्तेन कालेन तेन समयेन। तदाप्येष मम वचनमवचनीकृत्यानयेन व्यसनमापन्नः। एतर्ह्यप्येष मम वचनमवचनीकृत्यानयेन व्यसनमापन्नः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। भदन्त देवदत्तो भगवतो वचनमशृण्वन्नवीचिपरायणः संवृत्त इति। भगवानाह। न भिक्षव एतर्हि यथा अतीतेऽप्यध्वनि एष मम विक्रोशतो वचनमशृण्वन्नवीचिपरायणः संवृत्तः। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवोऽन्यतमस्यां राजधान्यां [राजा राज्यं] कारयति ऋद्धं च यावदाकीर्णबहुजनमनुष्यं च। पुण्यानुभावाद्देवता अन्तरीक्षे आसनं धारयन्ति। तस्य राज्ञः पुरोहितस्य द्वौ पुत्रौ ज्येष्ठो कनीयांश्च। तत्र ज्येष्ठो नैष्क्रम्याभिनन्दी। कनीयान् पौरोहित्याभिनन्दी। ज्येष्ठः पश्यति पितरं धर्माधर्मेण पौरोहित्यं कारयन्तम्। स संलक्षयति। अहं पितुरत्ययात्पुरोहितो भविष्यामि। धर्माधर्मेण पौरोहित्यं कृत्वा नरकपरायणो भविष्यामि यत्त्वहमपि प्रव्रजेयमिति। स पितरमनुज्ञाप्य भगवच्छासने प्रव्रजितः। यावदपरेण समयेन पुरोहितः कालगतः। स कनीयान् पौरोहित्ये प्रतिष्ठापितः। सः अधर्मेण पौरोहित्यं कर्तुमारब्धः। जनकायः पीड्यते। यावदन्यतमः पुरुष इतश्चामुतश्च परिभ्रमंस्तस्य

ेष्ठस्य प्रव्रजितस्य सकाशमुपसंक्रान्तः । स तेन दृष्टः । कुतस्त्व-
ागच्छसीति । तेन समाख्यातम् । अमुष्या राजधान्याः । स वार्त्तां
ष्टुमारब्धः । स कथयति । राज्ञः पुरोहितः कालगतः । तस्य कनी-
ान् पुत्रः पौरोहित्ये प्रतिष्ठितः । सोऽधर्मेण पौरोहित्यं करोति ।
ानकायः पीडयते इति । स कथयति । किंचित्कालं प्रेरय[1] । अह-
व तत्र गत्वा अहितान्निवारयिष्यामि हिते च संनियोजयिष्यामि ।
ग्रेन] जनपदान्निपीड[य]तीति [समाख्यातं] तेन पुरुषेण गत्वा ज्ञाती-
ाम् एतत्प्रकरणं निवेदितम् । श्रुतिपरंपरया तेन कनीयसा श्रुतम् ।
ान राज्ञे निवेदितम् । देव मम स ज्येष्ठो भ्राता आगमिष्यतीति ।
ाजा कथयति शोभनम् । स एव पुरोहितो भविष्यतीति । स कथ-
ाति । देव त्वं नाम मया इयन्तं कालं वृथा सेवित इति । राजा
कथयति । एष लोकधर्मो ज्येष्ठः सः । अपित्वेकेन प्रकारेण तव
ौरोहित्यं भवत्विति । यदि त्वं तस्मिन्नागते कथयसि । अहं ज्येष्ठ
इति । स कथयति । एवं भवतु । वक्ष्यामीति । यावदसावागतः ।
ं दृष्ट्वा सराजका पर्षदुत्थिता । स तु नोत्थितः । तेनोक्तः । त्वं मम
कनीयान् कस्मान्नोत्तिष्ठसीति । स कथयति । त्वमेव कनीयानहं
ज्येष्ठः । यदि भवतु स प्रत्ययो वयं राजकुले वृद्धांश्च देवं
पृच्छामः । ज्येष्ठेन राजा पृष्टः । कथय भो राजन् आवयोर्ज्येष्ठ
इति । राज्ञा संप्रजानता मृषा वाग्भाषिता । एष ज्येष्ठस्त्वं
कनीयानिति । वाक्प्रव्याहरणकालसमनन्तरमेव तस्य देवताभि-

1 Tib. 461a, l. 7: མངོན་གྱིས་ཤིག་དང །

रासनं मुक्तम् । स पृथिव्यां पतितो मुखाच्चास्य पूतिगन्धः प्रवाति । ज्येष्ठः पुरोहितपुत्रो गाथां भाषते ।

मृषा हि भाषमाणस्य प्रक्रामन्ते हि देवताः ।
मुखं च पूतिकं भवति स्वर्गाच्च परिहीयते ॥
सत्यं कथय भो राजन्भविष्यसि यथा पुरा ।
मृषा वदसि चेद्व्रक्तमधो[1] यास्यसि चैतिकः ॥
अजिह्वकोऽसौ भवति मत्स्यो वारिचरो यथा ।
परिपृष्टो हि यो धर्ममधर्ममुपदेशयेत्[2] ॥
सत्यं कथय भो राजन्भविष्यसि यथा पुरा ।
मृषा वदसि चेद्व्रक्तमधो यास्यसि चैतिकः ॥
अपुमान् जायते तत्र पुमांस्तत्र न जायते ।
परिपृष्टो हि यो धर्ममधर्ममुपदेशयेत् ॥
सत्यं कथय भो राजन्भविष्यसि यथा पुरा ।
मृषा वदसि चेद्व्रक्तमधो यास्यसि चैतिकः ॥
वर्षत्यकाले देवश्च काले तत्र न वर्षति ।
परिपृष्टो हि यो धर्ममधर्ममुपदेशयेत् ॥
सत्यं कथय भो राजन्भविष्यसि यथा पुरा ।
मृषा वदसि चेद्व्रक्तमधो यास्यसि चैतिकः ॥
द्वे जिह्वे भवतस्तस्योरगस्येव हि जन्तुनः ।
परिपृष्टो हि यो धर्ममधर्ममुपदेशयेत् ॥

1 Tib. 462a, l. 3: ངེས་པར་བཞུད། =Surely go.

2 Ms. ०पदर्श० ; Tib. 462a, l. 5: སྟོན་བྱེད་ན།

सत्यं कथय भो राजन्भविष्यसि यथा पुरा ।
मृषा वदसि चेद्व्यक्तमधो यास्यसि चैतिकः ॥
इत्येवं चैतिको राजा कर्म कृत्वा सुदारुणम् ।
अवीचिं नरकं प्राप्तो निरयं पापकर्मणा ॥

किं मन्यध्वे भिक्षवो योऽसौ ज्येष्ठः पुरोहितपुत्रः अहमेव न कालेन तेन समयेन । योऽसौ चैतिको राजा एष एव वदत्तस्तेन कालेन तेन समयेन । तदाप्येष मम विक्रोशतो मश्रृण्वन्नवीचिं नरकं प्राप्त एतर्ह्यप्येष मम विक्रोशतो वचन- वन्नवीचिं नरकं प्राप्त इति ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । भदन्त देवदत्तो हितमुच्यमानो वचनमश्रृण्वन्नवीचिपरायणः त इति । भगवानाह । न भिक्षव एतर्हि । तथा अतीतेऽप्य- षेष मया हितमुच्यमानो वचनमश्रृण्वन्ननयेन व्यसनमापन्नस्त- यताम् ।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके यन्त्रकलाचार्यः प्रतिवसति । सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते चारयति । तस्य क्रीडतो रममाणस्य परिचारयतः काला- ग पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा नामत्ययात्प्रसूता । दारको जातः । तस्य त्रीणि सप्तकान्येक- तिदिवसानि विस्तरेण स तस्य जातिमहं कृत्वा कुलसदृशं नाम- व्यवस्थापितम् । स उन्नीतो वर्धितो महान्संवृत्तः । पिता चास्य गतः । सोऽन्यतमस्मिन् कर्वटकेऽन्यस्य यन्त्रकलाचार्यस्या-

न्तिका[द्य]न्त्रकलां शिक्षितुमारब्धः। तेनान्यतमस्मिन्कर्वटके गृहपतेः सकाशाद्दारिका प्रार्थिता। स कथयति। यदि अमुष्मिन् दिवसे आगच्छसि दास्यामि। अन्यथा नेति। तेन यंत्रकलाचार्यस्य निवेदितम्। उपाध्यायामुष्मिन् कर्वटके गृहपतिः। तस्य सकाशान्मया दारिका प्रार्थिता। स कथयति। यद्यमुष्मिन्दिवस आगच्छसि दास्यामि। अन्यथा नेति। यन्त्रकलाचार्यः कथयति। पुत्र यद्येवं गच्छावः। अहमेव प्रतीच्छामीति। स तेन सार्धं काष्ठमयं मयूरमभिरुह्य यस्मिन्नेव दिवसे अवधिः कृतस्तस्मिन्नेव दिवसे कर्वटकमनुप्राप्तः। दृष्ट्वा परं विस्मयमापन्नः। ततो दारिकां प्रतिगृह्य पुनस्तद्यन्त्रमारुह्य स्वगृहमागतः। यन्त्रं संगृह्य मातुः समर्पितम् उक्तं च। अयं तव पुत्रो यन्त्रस्य प्रवर्तनयोगं जानीते नो तु निवर्तनम्। न त्वयास्य यन्त्रं देयमिति। भूयो भूयो मातुः कथयति। अम्ब प्रयच्छ मे यन्त्रं महाजनकायमन्वावर्तयामीति। सा कथयति। पुत्र आचार्यस्ते कथयति। अयं प्रवर्तनप्रयोगं जानीते नो तु निवर्तनम्। मा दास्यसि मानयेन व्यसनमापत्स्यसे इति। तस्मादहं न ददामीति। स कथयति। अम्ब प्रवर्तनमप्यहं जानामि निवर्तनमपि। किं न्वसावाचार्यो मात्सर्येण न ददातीति। लघुचित्तो मातृग्रामः। तया लोभितया दत्तम्। स यन्त्रमाम्रेडयाभिरुह्य[1] संप्रस्थितो महाजनकायोऽभिप्रसन्नः। ततो यन्त्रकलाचार्येण दृष्टः। स कथयति। गतोऽयमपुनरनागमनायेति। स यथा यथा संभ्रमणादाम्रेडयति

1 Tib. 463b, l. 7: འཁྲུལ་འཁོར་སྦྱར་ཏེ་ཞོན་ནས།

तथा दूरतरं गच्छति यावन्महासमुद्रं गतः। महासमुद्रे वर्षदेवः। बन्धनानि छिन्नानि। अनयेन व्यसनमापन्नः।
गाथां भाषते।

ह्यर्थकामस्य हितानुकम्पितो वचो न गृह्णाति यथानुशिष्टम्।
उह्यते दारुमयेण पक्षिणा अनायको न शृणोतीह कस्यचित्॥

इति।

भगवानाह किं मन्यध्वे भिक्षवो योऽसौ यन्त्रकलाचार्यः अह-
त् तेन कालेन तेन समयेन। योऽसौ तस्यान्तेवासी एष एव स
तस्तेन कालेन तेन समयेन। तदाप्येष वचनमशृण्वन् अनयेन
नमापन्नः। एतर्ह्यप्येष मया हितमुच्यमानो मम वचनमशृण्व-
न व्यसनमापन्नः।

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। उच्यते भदन्त
ामग्री इति। तत्र कतरो भेदः कतरा संघसामग्री। इतश्चो-
न् भिक्षवः अधर्मे[1] धर्मसंज्ञिनो व्यग्रे अव्यग्रसंज्ञिनः[2] कर्माणि
न्त। अयमुच्यते संघभेदः। यतस्तु धर्मे[3] धर्मसंज्ञिनः समग्रे
संज्ञिनः[4] कर्माणि कुर्वन्ति। इयमुच्यते संघसामग्री इति[5]।

यत्रैको भिक्षुर्न [त]त्र संघो भिद्यते। यत्र द्वौ यत्र त्रयो
दृष्टौ न तत्र संघो भिद्यते। यत्र नव भिक्षव उत्तरे वा तत्र
ां कारणाभ्यां संघो भिद्यते। ज्ञप्तिकर्मणा शलाकाग्रह-
च।

Ms. अधर्मेण 2 Ms. व्यग्राव्यग्र०

Ms. धर्मेण 4 Ms. समग्रासमग्र०

Cf. Pali Vinaya, vol. I, p. 328.

कथं ज्ञप्तिकर्मणा। यथापि तद्देवदत्तो भिक्षूणां ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति। पंचभिरायुष्मन्तो [1]व्रतपदैर्भिक्षुः शुध्यति विमुच्यते निर्याति। सुखदुःखं व्यतिक्रामति। सुखदुःखव्यतिक्रमं चानुप्राप्नोति। कतमैः पंचभिः[2]। आरण्यकत्वेन आयुष्मन्तो भिक्षुः शुध्यति मुच्यते निर्याति। सुखदुःखं व्यतिक्रामति। सुखदुःख[व्यतिक्रमं] चानुप्राप्नोति। वृक्षमूलिकत्वेन त्रैचीवरिकत्वेन पांसुकूलिकत्वेनायुष्मन्तो भिक्षुः शुध्यति विमुच्यते निर्याति। सुखदुःखं व्यतिक्रामति। सुखदुःखव्यतिक्रमं चानुप्राप्नोति। येषां युष्माकमायुष्मन्तः क्षमन्ते एभिः पंचभिः व्रतपदैः शोद्धुं मोक्तुं निर्यातुं ते श्रमणस्य गौतमस्याराद्भवन्तु। हिरुग् भवन्तु। दूरेण परेण भवन्तु। इत्येषा ज्ञप्तिः। इत्येवं ज्ञप्तिकर्मणा।

कथं शलाकाग्रहणेन। यथापि [तद्] देवदत्तो भिक्षूणां ज्ञापयति संज्ञापयति शिक्षयति। पंचभिरायुष्मन्तो व्रतपदैर्भिक्षुः शुध्यति मुच्यते निर्याति। सुखदुःखं व्यतिक्रामति। सुखदुःखव्यतिक्रमं चानुप्राप्नोति। कतमैः पंचभिः। आरण्यकत्वेनायुष्मन्तो भिक्षुः शुध्यति मुच्यते निर्याति। सु[खदुः]खं व्यतिक्रामति। सुखदुःखव्यतिक्रमं चानुप्राप्नोति। वृक्षमूलिकत्वेन त्रैचीवरिकत्वेन पांसुकूलिकत्वेनायुष्मन्तो भिक्षुः शुध्यति विमुच्यते निर्याति। सुखदुःखं व्यतिक्रामति। सुखदुःखव्यतिक्रमं चानुप्राप्नोति। येषां युष्माकमायुष्मन्तः क्षमन्ते

1 Ms. वृत throughout.

2 In Tib. (464b) also the number is five, though the number of *vratapadas* enumerated is four. See my *Early Monastic Buddhism*, vol. II, p. 7.

पंचभिर्व्रतपदैः शोद्धुं मोक्तुं निर्यातुं श्रमणस्य गौतमस्यारा-
तु। हिरुग्भवन्तु। दूरेण परेण भवन्तु। शलाकां गृह्णन्त्विति।
त्तश्चात्मपंचमः शलाकां गृह्णाति। एवं शलाकाग्रहणेन।

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। उत्क्षिप्तकेन
ऽदन्त संघो भिद्यते। [न] उत्क्षिप्तकानुवर्तकेन [न] उत्क्षिप्त-
वर्तकानुवर्तकेन। नोत्क्षेपकेण नोत्क्षेपकानुवर्तकेन नोत्क्षेप-
वर्तकानुवर्तकेन[1]।

उत्क्षिप्तकानुवर्तकेन तावद्भदन्त संघो भिद्यते। न उत्क्षिप्तकेन
त्क्षिप्तकानुवर्तकानुवर्तकेण। न उत्क्षेपकेण [न उत्क्षेपकानु-
र्तकेन] न उत्क्षिप्तकानुवर्तकानुवर्तकेन।

उत्क्षिप्तकानुवर्तकानुवर्तकेन तावद्भदन्त संघो भिद्यते। न
क्षिप्तकेन न उत्क्षिप्तानुवर्तकेन। न उत्क्षेपकेण न [उत्क्षेप-
नुवर्तकेन] न उत्क्षेपकानुवर्तकानुवर्तकेन।

उत्क्षेपकेण तावद्भदन्त संघो भिद्येत। न उत्क्षिप्तकेन न
क्षिप्तकानुवर्तकेन [न] उत्क्षिप्तकानुवर्तकानुवर्तकेन। [न
क्षे]पकानुवर्तकेन न उत्क्षेपकानुवर्तकानुवर्तकेन।

उत्क्षेपकानुवर्तकेन तावद्भदन्त संघो भिद्यते। नोत्क्षिप्त-
केन न उत्क्षिप्तकानुवर्तकेन न उत्क्षिप्तकानुवर्तकानुवर्तकेन।
न उत्क्षेपकेण न उत्क्षेपकानुवर्तकानुवर्तकेन।

उत्क्षेपकानुवर्तकानुवर्तकेन तावद्भदन्त संघो भिद्यते। न

[1] Cf. Pāli Vinaya, vol I, p. 338f.

उत्क्षिप्तकेन न उत्क्षिप्तकानुवर्तकेन न उत्क्षिप्तकानुवर्तकानुवर्तकेन। न उत्क्षेपकेण न उत्क्षेपकानुवर्तकेन।

सर्वैरेभिरुदालिन् संघो भिद्येत स्थापयित्वा पृ[थ]ग्[1] उत्क्षिप्तकम्।

अन्तरोद्दानम्।

**संघभेदैश्च सामग्री एकः संघं [न भिद्यते]।**

**नवानामन्तिमो भेदे तिस्र उत्क्षेपषष्ठिकाः[2] ॥**

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। यदुक्तं भदन्त भगवता समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते। स्पृश्यते चानन्तर्यावद्येन कर्मणा। कियता भदन्त भिक्षुः समग्रश्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा[3]।

यतश्चोदालिन् भिक्षुरधर्मे अधर्मसंज्ञी[4] भेदे [अधर्मसंज्ञी] भिक्षूणां ज्ञापयति [संज्ञापयति] शिक्षयति ग्राहयति संघस्य भेदाय पराक्रामति। इयता उदालिन्भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुः अधर्मे [अ]धर्मसंज्ञी भेदे धर्मसंज्ञी[5] भिक्षूणां ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति संघ[स्य] भेदाय

1 Tib. 466b, l. 4: འབའ་ཞིག་མ་མཐོང་བར།

2 See Tib. 466b, l. 5.

3 Tib. 467a, l. 1: མཚམས་མེད་པའི་ཁ་ན་མ་ཐོ་བ་སྐྱེ་ཞིང་མཚམས་མེད་པའི་ཁ་ན་མ་ཐོ་བའི་ལས་ཀྱིས་རེག་པར་འགྱུར་ལགས།

4 Ms. धर्मसंज्ञाने चाधर्मसंज्ञी। See Tib. 467a, l. 1.

5 Ms. अधर्मे०

ाक्रामात। इयता उदालिन्भिक्षुः समग्रं [श्रावक]संघं भित्त्वा
वीचिकमवद्यं प्रसूते। न तु स्पृशति आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुरधर्मे [अ]धर्मसंज्ञी भेदे वैमतिको भिक्षूणां
पयति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय परा-
मति। इयता उदा[लिन्भि]क्षुः समग्रं श्रावकसंघं भित्त्वा
वीचिकमवद्यं प्रसूते स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुरधर्मे धर्मसंज्ञी भेदे अधर्मसंज्ञी भिक्षूणां
पयति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय परा-
मति। इयता उदा[लिन्] भिक्षुः समग्रं श्रावकसंघं भित्त्वा
वीचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुरधर्मे धर्मसंज्ञी भेदे धर्मसंज्ञी भिक्षूण
यति शिक्षयति ग्राहयति वाचयति संघस्य भेदाय पराक्रामति।
ा उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिक-
ं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षूरधर्मे धर्मसंज्ञी भेदे वैमतिको भिक्षुणां
यति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय परा-
ते। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा
ीचिकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे अधर्मसंज्ञी भेदे अधर्मसंज्ञी भिक्षूणां
पति संज्ञापयति शिक्षयति ग्राहयति। इयता उदालिन्
ः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते स्पृश्यते
न्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे अधर्मसंज्ञी[1] भेदे धर्मसंज्ञी[2] भिक्षूणां ज्ञापयति [संज्ञापयति] शिक्षयति ग्राहयति। इयता उदालिन् भिक्षुः [सम]ग्रं श्रावकसंघं भित्त्वा आवीचकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे [अ]धर्मसंज्ञी[3] भेदे वैमतिको भिक्षूणां ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय पराक्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे धर्मसंज्ञी भेदे अधर्मसंज्ञी भिक्षूणां ज्ञापयति संज्ञापयति—शिक्षयति ग्राहयति संघस्य भेदाय पराक्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे धर्मसंज्ञी भेदे धर्मसंज्ञी भिक्षूणां ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति। संघस्य [भेदाय प]राक्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

यतश्चोदालिन् भिक्षुर्धर्मे धर्मसंज्ञी भेदे वैमतिको भिक्षूणां ज्ञापयति संज्ञापयति [शिक्षयति] ग्राहयति संघस्य भेदाय पराक्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।

1 Ms. भिक्षुरधर्मे धर्मसंज्ञी

2 Ms. अधर्मसंज्ञी ; same in Tib.

3 Ms. धर्मसंज्ञी

यतश्चोदालिन् भिक्षुरधर्मे वैमतिको भेदे अधर्मसंज्ञी
णां ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय
क्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा
ोचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।
यतश्चोदालिन् भिक्षुरधर्मे वैमतिको भेदे धर्मसंज्ञी भिक्षूणां
यति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय परा-
ति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवी-
मवद्यं प्रसूते [न तु] स्पृश्यते आनन्तर्यावद्येन कर्मणा।
यतश्चो[दालिन् भिक्षु]रधर्मे वैमतिको भेदे वैमतिको भिक्षूणां
यति संज्ञापयति शिक्षयति ग्राहयति संघस्य [भेदाय]
क्रामति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा
ोचिकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्याव[द्येन कर्मणा]।
यतश्चोदालिन् भिक्षुर्धर्म वैमतिको भेदे [अ]धर्मसंज्ञी भिक्षूणां
यति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय परा-
ति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा
ोचिकमवद्यं प्रसूते स्पृश्यते चानन्तर्यावद्येन कर्मणा।
यतश्चोदालिन् भिक्षुर्धर्मे वैमतिको भेदे धर्मसंज्ञी भिक्षूणां ज्ञाप-
संज्ञापयति शिक्षयति [ग्राहयति संघस्य भेदाय][1] परा-
ति। इयता उदालिन् भिक्षुः समग्रं श्रावकसंघं भित्त्वा आवी-
मवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।
यतश्चोदालिन् भिक्षुर्धर्मे वैमतिको भेदे वैमतिको भिक्षूणां

[1] Ms. शिक्षयति नास्य भेदाय।

ज्ञापयति संज्ञापयति शिक्षयति ग्राहयति संघस्य भेदाय पराक्रामति। इयता [उदालिन् भिक्षुः] समग्रं श्रावकसंघं भित्त्वा आवीचिकमवद्यं प्रसूते न तु स्पृश्यते आनन्तर्यावद्येन कर्मणा।

एवमेतावन्ति [अष्टादश।] आसां षट् [न] स्पृश्यन्ते आनन्तेर्यावद्येन कर्मणा। यासु भेदे अधर्मसंज्ञी अवशिष्टाः [स्पृश्यन्ते] आनन्तर्यावद्येन कर्मणेति।

विनये संघभेदवस्तु समाप्तम्॥

# INDEX